॥ श्री ॥

काशी-संस्कृत-ग्रन्थमाला

३८



( व्याकरणविभागे सप्तम पुष्पम् )



श्रीवररुचिप्रणीतः

# प्राकृत-प्रकाशः

श्रीभामहकृत 'मनोरमा' व्याख्यासहितः

महामहोपाध्याय-

श्रीमथुराप्रसाददीक्षितविरचित-

'चन्द्रिका'-'प्रदीप'-सस्कृत-हिन्दीव्याख्याद्वयोपेतः

श्रीमदुदयरामशास्त्रिडबरालकृत-

टिप्पणीपरिशिष्टाभ्या विभूषितः

साहित्याचार्य-

श्रीजगन्नाथशास्त्रिहोशिङ्गमहोदयेन

भूमिकादिभि सम्भूष्य सशोधित



चौखम्बा-संस्कृत-सीरीज-आफिस, वाराणसी-१

तिपो

# प्रस्तावना

श्रीमद्भागवताऽनुरञ्जनविमलमतीना प्रेक्षावता सुविदितमेवैतद्यद् धर्मार्थकाममोक्षाणाञ्चतुर्णा वर्गस्य प्राप्तये एव यतितव्य सर्वै । तत्प्राप्त्युपायाश्च बहवोऽसङ्ख्यै प्रबन्धै प्रनिपादिता अपि मृदुबुद्धीना क्रीडनैकमनोऽनुरागिणा न तथोपकर्तुं शक्ता यथा दृश्यकाव्यानि । तानि हि [illegible] दर्शनमात्रेणैवानन्दसन्दोहजनकानि सदुपदेश ग्राहयन्ति । तदुक्त नाट्याचार्येण श्रीमता भरतमुनिना नाट्यशास्त्रे प्रथमेऽध्याये—

ब्रह्मोवाच—

सर्वशास्त्रार्थसम्पन्न सर्वशिष्यप्रवर्तकम् ।
नाट्याख्य पञ्चम वेद सेतिहास करोम्यहम् ॥ १५ ॥

पुनश्च तत्रैव ब्रह्मणो दै यसान्त्वनावसरे—

भवता देवताना च शुभाशुभविकल्पकै ।
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृत ॥ ७२ ॥
नैकान्ततोऽत्र भवतां देवाना चापि भावनम् ।
त्रैलोक्यस्यास्य सर्वस्य नाट्यभावानुकीर्तनम् ॥ ७३ ॥
धर्माधर्मप्रवृत्तानां कामा कामार्थसेविनाम् ।
निग्रह दुर्विनीतानां मत्तानां दमनं क्रिया ॥ ७५ ॥
देवानामसुराणा च राज्ये लोकस्य चैव हि ।
महर्षीणा च विज्ञेय नाट्य वृत्तान्तदर्शकम् ॥ ८४ ॥
धर्म्यं यशस्यमायुष्य हित बुद्धिविवर्द्धनम् ।
लोकोपदेशजनन नाट्यमेतद्भविष्यति ॥ ८६ ॥ इति ।

तानि च सस्कृतमयानि प्राकृतमयानि च भवन्ति, तदाह मुनि—

नानादेशसमुत्थ हि काव्य भवति नाटके । इति ।

तत्र सस्कृतभाषापरिज्ञान पाणिनीयादिव्याकरणेन, प्राकृतज्ञानाय च वररुच्यादीना प्रयत्न । तच्च किमिति कुशीलवाधीनमेव । वयन्तु आचार्याणा वचनोपन्यासेनैवोदास्महे ।

अत्र मुनि —

एतदेव विपर्यस्त सस्कारगुणवर्जितम् ।
विज्ञेय प्राकृत पाठ्य नानावस्थान्तरात्मकम् ॥ अ० १७, श्लो० २ ॥

तथा च वाक्यपदीये भर्तृहरि — दैवी वाक् व्यवकीर्णेयमशक्तैरभिधातृभि ।' इति । कथमियमशक्तिरिति तु न प्रयत्नावगम्यम् । 'अम्बाम्बेति यथा बाल शिक्षमाण प्रभाषते ।' इत्यादिरीत्या देशकालभेदेनैव प्रतीमहे ।

वङ्गमध्यपञ्चालादिदेशजाना परस्परमेकस्यैव शब्दस्य जागरूको महानुच्चारणभेद एव विप्रतिपन्नाना तुष्टिदो भविष्यति ।

हेमोऽपि—प्रकृति संस्कृतम् । तत्र भव, तत आगत वा प्राकृतम् । इति ।

तथा च गीतगोविन्दे रसिकसर्वस्व —'संस्कृतात्प्राकृतम् इष्टं ततोऽपभ्रंशभाषणम्' इति।

शकुन्तलाया शङ्करोऽपि 'संस्कृतात्प्राकृत श्रेष्ठ ततोऽपभ्रंशभाषणम्' इति प्रमाणत्वेनोदाजहार—संस्कृताद् श्रेष्ठ प्राकृत जातम्, ततोऽपभ्रंश ।

केचित्तु—प्रकृत्या स्वभावेन सिद्धम् प्राकृतम् । ततश्च वैयाकरणै साधित हि संस्कृतमित्यभिधीयते । अतो न संस्कृतमूलक प्राकृतम् । प्रत्युत प्राकृतमूलकमेव संस्कृतम्—इत्याहु ।

अपरे तु—वेदमूलकमिदम् । तनत्वनादिप्रत्ययानाम्, अम्हे-अस्मे-आदिपदाना, लिङ्गवचनविभक्त्यादीनाञ्च वैदिकै प्रयोगै साम्यदर्शनात् । एतन्मूलक च संस्कृतम्—इति वदन्ति ।

साम्प्रदायिकैस्तूभयमपि नाद्रियते—यदि स्वभावसिद्ध प्राकृतम्, तर्हि कोऽसौ स्वभाव कीदृशश्च, येनेदृगेव भाषण स्यात् किंसमवेतश्च । जनसमवेतश्चेद् 'दैवी वाग् व्यवकीर्णेयम्' इत्यस्मदभिहिते पक्षपात । पारमेश्वरे तु स्वभावे वैरूप्यं नोपपद्यते—न ह्यग्नौ शैत्य क्वचिदपि कदाप्युपलभ्यते । एवं तत्तद्भाषाभेद सुतरां नोपपद्यते ।

सर्वासामेव भिन्नानामपि पारमेश्वरस्वभावसिद्धत्वे तु भाषापरिज्ञानिना विदुषा महान् कोलाहलो भविष्यति ।

अथ च यदीयं भाषा वेदभाषासमुद्भवा तत्समकालिका संस्कृतात् प्राचीना वा स्वीक्रियते तर्हि पाणिनीयव्याकरणस्याऽपूर्णता स्यात्, तत्र प्राकृतस्याऽव्याकृतत्वात् । भगवता पाणिनिना च तत्र तत्र बाहुलकेनाऽपि वैदिकशब्दव्याकृत्या स्वव्याकरणस्य पूर्णताया प्रदर्शनात् । तथा च गावी गोणी—गोपोतलिकेत्यादीनामपि असाधुशब्दत्व व्यवहारो नोपयुज्यते । प्रत्युत संस्कृताद्विकृतस्य प्राकृतस्येव प्राकृताद्विकृतस्य संस्कृतस्यैवापभ्रंशव्यवहारापत्ति स्यात् । न तथा व्यवहारस्तथाव्युत्पन्नानामपीष्ट । न ह्यस्ति राजाज्ञा 'पाणिनीयादिव्याकृतस्य नाऽपभ्रंशव्यवहार' इति ।

लिङ्गवचनसाम्यन्तु न दृढतर प्रमाणम् । न हि आङ्ग्लभाषाया 'फादर' इति शब्द उच्चारणसौकर्येणोच्चरितस्य पितृशब्दस्य प्रकृतिरिति कोऽपि प्रेक्षावान् मनुते । तथा च—'डाटर' इति शब्द दुहितृशब्दस्य । नच कोऽपि 'तात' इत्युच्चारयितव्ये 'टाट' इति रटन् भारतीयो बाल आङ्ग्लभाषापाठकस्तद्देशीयो वा गण्यते ।

अतो युक्तमुत्पश्याम —प्रकृति संस्कृतम्, तत प्राकृतमिति । तथा च प्राकृतमञ्जर्याम्—'व्याकर्तुं प्राकृतत्वेन गिर परिणतिं गता' इति ।

वेदमूलकत्वेऽपि न किमपि प्रमाणम् ।

अस्तु वा यदपि तज्ज्ञानायाऽवश्य प्रयतितव्यम् । यतोऽत्र भाषायां सुललिता प्रबन्धा सन्ति । तदुक्तम्—

'अहो तत् प्राकृत हारि प्रियावक्त्रेन्दुसुन्दरम् ।
सूक्तयो यत्र राजन्ते सुधानिष्यन्दनिर्झरा' ॥ इति ।

तच्च प्राकृत वररुचिमते—प्राकृत-पैशाची-मागधी-शौरसेनी-भेदेन चतुर्द्धा। तासु पैशाची मागधी च शौरसेनीविकृती, प्रकृति शौरसेनीत्युभयत्र दर्शनात्। शौरसेनी संस्कृतविकृति प्राकृतवत्। 'प्रकृति संस्कृतम्'-इति दर्शनात्। शौरसेन्यामनुक्त कार्यं नवभि परिच्छेदै प्रतिपादितप्राकृतानुसारि भवति 'शेष माहाराष्ट्रीवद्' इत्यत्र माहाराष्ट्रीपदेन तस्यैव ग्रहणात्। तथा च काव्यादर्शे—

महाराष्ट्राशया भाषा प्रकृष्ट प्राकृतं विदु। इति।

हेमस्तु—चूलिकापैशाचिकम् १ आर्षं प्राकृतम् २ अपभ्रशम् ३ चेत्यधिकभेदै सप्तधा विभजते।

तथा च भेदप्रतिपादकानि सूत्राणि—

आर्षम्। ८। १। ३।

चूलिकापैशाचिके द्वितीयतुर्ययोराद्यद्वितीयौ। ८। ४। ३२५।

स्वराणा स्वरा प्रायोऽपभ्रशे। ८। ४। ३२९।

प्राकृतसर्वस्वकारमार्कण्डेयेन भाषा-विभाषा-अपभ्रश-पैशाची-भेदाद् भाषा श्चतुर्धा विभक्ता।

तत्र भाषा—माहाराष्ट्री-शौरसेनी-प्राच्या-अवन्ती-मागधी-भेदेन पञ्चधा।

अर्द्धमागधी तु मागध्यामेवान्तर्भाविता।

विभाषा—शाकारी १ चाण्डाली २ शाबरी ३ आभीरिकी ४ शाक्की (शाखी) ५ चेति पञ्चधा।

अपभ्रश—आद्रीं द्राविडी च विना सप्तविंशतिधा च विभक्त।

अन्या अपि तिस्रो भाषा स्वीकृता—नागर-आचडोपनागरभेदेन। पैशाचीभाषा तिसृषु नागरभाषासु विभक्ता। तद्यथा—कैकेयी १, शौरसेनी २, पाञ्चाली ३ च। राम तर्कवागीशेनाऽपि एवमेव प्रकटितम्। सर्वैरपि प्राकृतवैयाकरणैर्माहाराष्ट्री-पैशाची-मागधी-शौरसेनी चैता प्राकृतभाषा स्वीकृता। काव्यालङ्कारे रुद्रटो भाषाणा तिस्रो विधा प्राह—'प्राकृत संस्कृतश्चैतदपभ्रश इति त्रिधा।' इति।

काव्यादर्शे दण्डी च—

'तदेतद्वाङ्मय भूय संस्कृत प्राकृत तथा।
अपभ्रशश्च मिश्र चेत्याहुराप्ताश्चतुर्विधम्'॥ इति। १। ३२।

चतुर्विधा हि ग्रन्था संस्कृतनिबद्धा केचित्, प्राकृतनिबद्धा केचित्, केचिदपभ्रश-निबद्धा, केचिदासा साङ्कर्येण निबद्धा मिश्रा इत्युच्यन्त इत्यर्थ। 'संस्कृत सर्गबन्धादि प्राकृत स्कन्धकादिकम्। आसारादीन्यपभ्रशो नाटकादिषु मिश्रकम्'॥ इति च।

पुराणवाग्भटोऽपि वाग्भटालङ्कारे (२। १) संस्कृतप्राकृतापभ्रशभूतभाषितेतिभेदेन चतुर्धा विभजते।

अर्वाचीनोऽपि अलङ्कारतिलके (१५-३), एव रुद्रटश्च काव्यालङ्कारे (२। १२

सूत्रे ), एवमपभ्रंशविचारस्यावश्यकत्वाद् वररुचिना कथमुपेक्षित इति विप्रतिपत्तौ कश्चिद्—इयमपूर्णतैव वररुचेरिति ।

आसा प्रादुर्भाव एव नेति त्वन्य ।

अपरे तु—वररुचिना 'दाढादयो बहुलम्' (४।३३) इति सूत्रकरणादेवाऽपभ्रंशोऽपि सगृहीत एव । तस्य च भामहेन आदिशब्दोऽय प्रकारार्थ , तेन सर्व एव देशसङ्केतप्रवृत्ता भाषाशब्दा परिगृहीता, इति व्याख्यातत्वात् । अपभ्रंशश्च देशसङ्केतप्रवृत्ता एव भाषा । तदुक्त वृद्धवाग्भटेन—

'अपभ्रंशस्तु यच्छुद्ध तत्तद्देशेषु भाषितम्' ॥ इति ।

तथा च काव्यादर्शे दण्डी—

'यदा च आभीर्यादयो देशभाषा काव्यनाटकेषु निबद्धास्तदाऽपभ्रंशपदेन व्यवह्रियन्ते ।' तदुक्तम् तेन-

'शौरसेनी च गौडी च लाटी चान्या च तादृशी ।
याति प्राकृतमित्येव व्यवहारेषु सन्निधिम् ॥
आभीरादिगिर काव्येष्वपभ्रंश इति स्मृता ।
शास्त्रेषु सस्कृतादन्यदपभ्रंशतयोदितम् ॥' इति । ( १ । ३५-३६ )

यत्तु अपभ्रंशपदेन भारतीया प्रचलिता भाषा गृह्यन्ते, ताश्च निबध्यन्ते काव्य नाटकेषु । तदुक्त नाट्यशास्त्रे भरतमुनिना—

'शौरसेनी समाश्रित्य भाषा कार्या तु नाटके ।
अथवा छन्दत कार्या देशभाषाप्रयोक्तृभि ॥' इति । ( १७-४६ )

अधुना प्रचलिततत्तद्देशभाषास्वपि वङ्गदेशे यात्रागन्धर्वगानम्, नैपाले कूर्माचले च हरिश्चन्द्रादिनर्तनम् उपलभ्यत एव । अतोऽपभ्रंशस्य प्राकृतपदेन ग्रहीतुमशक्य त्वादुचित एव तदनुल्लेख प्राकृतप्रकाश इति । तत्तु दण्डिविरोधादुपेक्ष्यम् ।

वररुचिसमयेऽपभ्रंशस्य व्यवहारानुदय इति तु न सम्यक् प्रतिभाति ।

'त्रिविध तच्च विज्ञेय नाट्ययोगे समासत ।
समानशब्दैर्विभ्रष्ट देशीमतमथापि वा ॥'

इति भरतमुनिनाऽपि तस्य प्रदर्शितप्रायत्वात् । यथा 'गौरित्यस्य गावी गोणी गोपोतलिकेत्येवमादयो बह्वोऽपभ्रंशा ' इति भगवता पतञ्जलिना महाभाष्येऽपभ्रंशस्य व्यवहृतत्वात् स्वय दाढेत्यादिसूत्रप्रणयनाच्च स्यादेतत् । सर्वमेवैतद् प्राकृत तद्भव, तत्सम , देशी चेति त्रिधा विभजन्ते सूरय । तदाह दण्डी—'तद्भवस्तत्समो देशात्यनेक प्राकृतक्रम ।' इति। तत्र यद्यपि तद्भवप्राकृतव्याकृत्यर्थमेव प्राकृतवैयाकरणाना प्रयत्न । तदुक्तम्—'अथ प्राकृतम् ।' (८।१।१) इति सूत्रे व्याख्यानावसरे हेमेन—'सस्कृतानन्तर प्राकृतस्याऽनुशासन सिद्धसाध्यमानभेदसस्कृतयोनेरेव तस्य लक्षण न देश्यस्य- इति ज्ञापनार्थम् । सस्कृतसम तु सस्कृतलक्षणेनैव गतार्थम्' इति । तथापि तत्तदप्रदेशेषु

बाहुलकेन दैशिकानामप्युल्लेखाद्दैशिकमपि प्रायस्तद्भवत्वेन स्वीकुर्वन्ति । ४।३३ सूत्र-व्याख्यानावसरे भामहेन देशसङ्केतेत्यादिनैतस्यार्थस्य स्पष्टमुक्तत्वात् ।

हेमोऽप्याह—'गोणादय' (८ । २ । ७३) गोणादय शब्दा अनुक्तप्रकृतिप्रत्यय-लोपागमवर्णविकारा बहुल निपात्यन्ते, तद्यथा—गौ गोणी गावी । त्रिपञ्चाशत्—तेवण्णा । त्रिचत्वारिंशत्-तेआलीसा । इति । तत्समस्तु न सस्कृतात्पृथगिति न तद्विषयक प्रयत्न कस्यापि ।

अथ कोऽय प्राकृतसूत्रप्रणेता वररुचि कदा समभवत्, कदा चैतत्सूत्राणि प्रणिनायेति वृत्त सम्यक्तया निश्चेतु न शक्यते । एको वररुचि सुप्रसिद्धविक्रमराजसमानकालिकोऽप्युपलभ्यते । तथाहि—

'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासा ।
ख्यातो वराहमिहिरो नृपते सभाया रत्नानि वै वररुचिर्नवविक्रमस्य ॥' इति ।

अन्यत्र—

'पाणिनि सूत्रकार च भाष्यकार पतञ्जलिम् ।
वाक्यकार वररुचिम् ॥'

इति पाणिनिसमकालिक कात्यायनाऽपराभिध प्रतीयते । महाभाष्यकारैरपि 'तेन प्रोक्तम्' ( ४ । ३ । १०७ ) सूत्रे 'वररुचिना प्रोक्तो ग्रन्थ वाररुच' इति चोदाहृतम् । तथा च प्राकृतमञ्जर्याम्—

'प्रसीदन्तु च वाचस्ता यासां माधुर्यमुच्छ्रितम् ।
प्राकृतच्छद्मना चक्रे कात्यायनमहाकवि ॥
व्याकर्तुं प्राकृतत्वेन गिर परिणतिं गता ।
कोऽन्य शक्तो भवेत्तस्मात्कवे कात्यायनादृते ॥' इति ।

अयमेव कात्यायनापराभिख्य श्रौतसूत्रकार पाणिनीयसूत्रवार्तिककारो रूपमाला-प्रणेता बृहत्सहितानिर्माता चेत्यत्र दृढतरप्रमाणाऽभावेपि विरोध नाऽऽकलयति सूरय । कथासरित्सागरकथामञ्जर्यादावुपवर्णितोऽपि वररुचिर्विलक्षणप्रतिभाशालित्वेन नोक्तार्थे विरोधमवतारयतीति विवेचकैर्विवेचनीयम् ।

अन्यो वाप्यय वररुचि स्यात् । तथाप्येतत्प्रतीयते यदय सर्वेषु प्राकृतवैयाकरणेषु प्रथम आचार्य ।

एत सूत्रप्रकाशवृत्तिप्रणेता भामह कदा समभवत् इत्यप्यतिदुरूहताङ्गतो निर्णेतुम् । भामहप्रणीतमलङ्कारलक्षणमप्यस्तीति श्रूयते । स च काश्मीरदेशीय परमप्राचीन श्चेति झल्लकीकरोपाख्यैर्वामनाचार्यैर्निरूपितम् । एतेनापि वररुचे परमपुराणता प्रतीयते । इत्यल पल्लवितेन ।

अन्यत्र प्राकृतसूत्रेषु भाषाबाहुल्येन कार्यवैविध्येन च वररुचे प्राचीनता प्रदर्श्यते । यच्च कार्यं वररुचिना बाहुलकेन आदिशब्देन च सगृहीत तदर्थमपि अन्येषा सूत्र

प्रणयनप्रयत्न । आस्तामेतद् । हेमचन्द्रसमये हि विविधभाषा भिन्नरूपा सञ्जाता इति प्रतीयते । तथा च प्राकृतप्रकाशतो विशेषकार्याणां दिग्दर्शनम्—

प्रत्यये ङीर्न वा ८ । ३ । ३१ । नीली । नीला—३२-३३ ।

अणादिप्रत्ययनिमित्तो ङी स्त्रिया वा भवति । साहणी कुरुचरी, साहणा कुरुचरा ।

धातवोऽर्थान्तरेऽपि ८ । ४ । २५९ । उक्तादर्थादर्थान्तरेऽपि धातवो वर्तन्ते । वलि प्राणने पठित, खादनेऽपि वर्तते । वलइ । खादति प्राणन करोति वा । एव कलि सङ्ख्याने सञ्ज्ञानेऽपि । कलइ । जानाति सख्यान करोति वा ।

विलप्युपालभ्योर्झङ्ख आदेश । झङ्खइ । विलपति, उपालभते, भाषते वा ।

फक्कतेस्थक्क । थक्कइ । नीचा गतिं करोति विलम्बयति वा । नीहरइ । पुरीषोत्सर्गं करोति ।

बहुलम् ८। १ । २ । बहुलमित्यधिकृत वेदितव्यमापादसमाप्ते ।

लुप्त-य र-व-श ष-सा दीघ ८ । १ । ४३ । प्राकृतलक्षणवशाल्लुप्ता याद्या उपर्यधो वा येषा शकारषकारसकाराणा तेषामादे स्वरस्य दीर्घो भवति ।

शस्य यलोपे—पश्यति, पासइ । रलोपे—विश्राम्यति, वीसमइ । मिश्रम्—मीस । वलोपे—अश्व, आसो । विश्वास, वीसासो । शलोपे—दुश्शासन दूसासणो । षस्य यलोपे—शिष्य, सीसो । रलोपे—वर्ष, वासो । वलोपे—विष्वक्, वीसु । षस्य—निषिक्त, नीसित्तो । सस्य यलोपे—सस्यम्, सासं । कस्यचित्, कासइ । रलोपे—उस्र, ऊसो । वलोपे—निस्व, नीसो । सलोपे—निस्सह, नीसहो ।

न दीर्घाऽनुस्वाराद् ८ । २ । ८२ । इति द्वित्वनिषेध ।

अवर्णो यश्रुति ८ । १ । १८० । कगचजेत्यादिना लुकि सति शेषोऽवर्णोऽवर्णात्परो लघुप्रयत्नतरयकारश्रुतिर्भवति । तित्थयरो । सयढ । नयर । इत्यादि । क्वचिदन्यतोऽपि-पियइ-इति ।

इत प्राचीनपुस्तकमधिकमशुद्धमासीद् । श्रीमता वाराणसास्थराजकीयसस्कृतपुस्तकालयाध्यक्षाणा पण्डितवर—म० म० श्रीगोपीनाथकविराजमहोदयाना म० म० प० विन्ध्येश्वरीप्रसादद्विवेदिना च साहाय्येन लिखितपुस्तक जर्मनदेशीयकाबिलमहोदयसम्पादितपुस्तक च दृष्ट्वा यथामति सावधान सशोधितम् । तत्सहायेनैव यत्र क्वचिद् टिप्पण्या पाठान्तरेण च सयोजितम् । द्वादशपरिच्छेदवृत्तौ च साहाय्य प्रापम् ।

छात्राणामुपकारार्थं पदसाधुत्वज्ञानार्थं तत्तत्कार्यप्रतिपादकसूत्राणा सख्या कोष्ठकान्तरे प्रदर्शिता । अन्यग्रन्थेभ्य कार्यविशेषाश्च टिप्पण्या प्रदर्शिता । मानुषमात्रसुलभतया दृष्टिप्रमादाज्जातानवधानता क्षन्तव्या विद्वद्भिरिति विज्ञापयते विदुषामनुचर —

वैशाखशुक्ला एकादशी,
वि स १९७७

पर्वतीय उदयराम डबराल.

## अथ नाट्याचार्य-मुनिमतेन भाषाणा भेदप्रदर्शन-
## पूर्वकं विनियोगः प्रदर्श्यते—

मागध्यवन्तिजा प्राच्या शूरसेन्यर्द्धमागधी ।
बाह्लीका दाक्षिणात्या च सप्त भाषा प्रकीर्तिता ॥ ४८ ॥
शबराभीरचण्डालसचरद्रविडोद्रजा ।
हीना वनेचराणा च विभाषा नाटके स्मृता ॥ ४९ ॥
मागधी तु नरेन्द्राणामन्तःपुरनिवासिनाम् ।
चेटाना राजपुत्राणा श्रेष्ठिना चार्द्धमागधा ॥ ५० ॥
प्राच्या विदूषकादीना धूर्तानामप्यवन्तिजा ।
नायिकाना सखीना च शूरसेनाविरोधिनी ॥ ५१ ॥
योधनागरकादीना दाक्षिणात्याथ दीव्यताम् ।
बाह्लीकभाषोदीच्याना खसाना च स्वदेशजा ॥ ५२ ॥
शबराणा शकादीना तत्स्वभावश्च यो गण ।
(श)मकारभाषयोक्तव्या चण्डाली पुक्कसादिषु ॥ ५३ ॥
अङ्गारकारव्याधाना काष्ठयन्त्रोपजीविनाम् ।
योज्या शबरभाषा तु किंचिद्वानौकसी तथा ॥ ५४ ॥
गवाश्वाजाविकोष्ट्रादिघोषस्थाननिवासिनाम् ।
आभीरोक्ति शाबरी वा द्राविडी द्रविडादिषु ॥ ५५ ॥
सुरङ्गा खनकादीना सौण्डीकाराश्च ( शौण्डिकाना च ) रक्षिणाम् ।
व्यसने नायकाना स्यादात्मरक्षासु मागधी ॥ ५६ ॥
न वर्बरकिराता ध्रद्रविडाद्यासु जातिषु ।
नाट्यप्रयोगे क्तव्य काव्य भापासमाश्रयम् ॥ ५७ ॥
गङ्गासागरमध्य तु ये देशा श्रुतिमागता ।
एकारबहुला तेषु भाषा तज्ज्ञ प्रयोजयेत् ॥ ५८ ॥
विन्ध्यसागरमध्ये तु ये देशा श्रुतिमागता ।
नकारबहुला तेषु भाषा तज्ज्ञ प्रयोजयेत् ॥ ५९ ॥
सुराष्ट्रावन्तिदेशेषु वेत्रवत्युत्तरेषु च ।
ये देशास्तेषु कुर्वीत चकारबहुलामिह ॥ ६० ॥
हिमवत्सिन्धुसौवीरान् ये च देशा समाश्रिता ।
उकारबहुला तज्ज्ञस्तेषु भापा प्रयोजयेत् ॥ ६१ ॥
चर्मण्वतीनदीपारे ये चार्बुदसमाश्रिता ।
तकारबहुला नित्य तेषु भापा प्रयोजयेत् ॥ ६२ ॥
एव भाषाविधान तु कर्तव्य नाटकाश्रयम् ।
अत्र नोक्त मया यच्च लोकाद् ग्राह्य बुधैस्तु तद् ॥ ६३ ॥



# उपोद्घातः

अथाय प्रकाश्यते श्रीवररुचिप्रणीत प्राकृतप्रकाशो नाम प्राकृतभाषाव्याकरण-ग्रन्थ श्रीभामहनिर्मितया मनोरमाख्यव्याख्यया, महामहोपाध्यायश्रीमथुराप्रसाददीक्षित-विरचितया चन्द्रिकाभिधया सस्कृतव्याख्यया प्रदीपनामकसरलहिन्दीभाषाटीकया च विभूषितो मुद्रापयित्वा। केवल मनोरमाख्यव्याख्यया सह नैकवारमनेकत्र प्राकाश्यमुप गतोऽय ग्रन्थ । चौखम्बासस्कृतपुस्तकालयेऽपि वाराणसेये द्वित्रिवारमसौ प्राकाश्यमुप-गच्छन्ननेकोपकरणालङ्कृत श्रीमदुदयरामशास्त्रिडबरालमहोदयै सम्पादित । साम्प्रत तु ततोऽपि वैशिष्ट्यमावहति चन्द्रिका प्रदीपाख्याभ्या सस्कृत हिन्दीव्याख्याभ्या समलङ्कृत ।

तत्र प्रकृते को नाम प्राकृतशब्दस्यार्थ इति विवेचनाया विदुषा मतद्वय जागर्ति लोके। तत्र हि प्रकृतिर्नाम सर्वसाधारणो जन, तया व्यवह्रियमाण वचनकदम्बक प्राकृतम्। व्याकरणादिसस्कारसम्पन्न तत् सस्कृतमिति प्रथम पक्ष । श्रीबाल्वैधेयादि भिर्झटिति बोधगम्यतयाद्रीयमाणा भाषा प्राकृताभिधाना सामान्यतया प्रतीयत इति सुस्पष्ट प्रथमपक्षाश्रयिणा सुधिया मतम्। श्रीवररुच्यादिप्राकृतव्याकरणसूत्रप्रणेतॄणामन्येषा च सस्कृतप्रणयिना विदुषां 'प्रकृति सस्कृतम्, तत आगत समुत्पन्न वा प्राकृतम्' इति मतम्। मतद्वये यत् किमप्येकतर समीचीनमसमीचीन वा भवतु मत, पर प्राकृतपदेन व्यवह्रियमाणा भाषा काप्यस्तीति न विप्रतिपत्ति केषामपि विदुषाम्। तस्या एव भाषाया अन्तर्गताना पदाना व्युत्पत्ति प्रदर्शयन्नय ग्रन्थ प्राकृतप्रकाश इत्यन्वर्थं नाम धत्ते।

अथ च प्राकृतभाषाया कति के च सूत्रकर्तार इति विषये वररुचि वाल्मीकि हेमचन्द्र त्रिविक्रमदेवाना चतुर्णा नामानि सप्रमाणमुपन्यस्यन्ति तद्विद । तत्र वररुचि हेमचन्द्रयो सूत्रकर्तृत्वमव्याहतमेव। त्रिविक्रमदेवस्य निजसूत्राणा स्वोपज्ञवृत्तिकर्तृद्वारा सूत्रकर्तृत्व प्रतिपादयन्ति विचक्षणा, पर कतिचन धीमन्तस्तु हेमचन्द्रकृतसूत्राणामेवेय-मेतत्कृता वृत्तिरिति प्रमाणयन्तो विवदमाना दृश्यन्ते। रुद्रमणिपुत्र कश्चिद्वाल्मीकि कविरप्युपलभ्यते वाल्मीकिनाम्ना, पर स एतत्सूत्रप्रणेता भवितु नार्हति। पुष्टप्रमाण मन्तरा नैतदपि प्रतिपादयितु शक्यते यत्—आदिकविर्वाल्मीकिरेवैतन्निर्माता, यद्यपि षड्भाषाचन्द्रिकाकारा श्रीलक्ष्मीधरास्तथा प्रत्यपादयन्। स एवायमिति प्रमाणान्तरै साधित स्यात्तर्हि न तत्र विषयेऽस्माक कापि विप्रतिपत्ति ।

श्रीवररुचिप्रणीतस्य प्राकृतप्रकाशस्य प्राचीनाश्चतस्रो व्याख्या समुपलभ्यन्ते—१ मनोरमा, २ प्राकृतमञ्जरी, ३ प्राकृतसञ्जीवनी, ४ सुबोधिनीति। तासु प्राचीनतमा तु भामहविरचिता मनोरमैवेति निर्विवादम्। श्रीकात्यायनप्रणीता प्राकृतमञ्जरी तदुत्तर कालमाश्रयतीति विद्वन्मतम्। सा च व्याख्या पद्यमयी नवपरिच्छेदात्मिका पूर्व निर्णय-सागरयन्त्रालय मोहमयीत प्रकाशिता, परमन्विष्यापि नास्माभिरुपलब्धेति तद्विषये न किमपि वक्तु पारयाम—चन्द्रिकोद्धृता पद्यपद्याशास्तत्रत्या उत ततोऽपि प्राचीना

इति। चन्द्रिकाकारै सञ्जीवनीसुबोधिन्योरुद्धृत्य प्रदर्शिता इत्यनुमिनुम । वाराणसेय सरस्वतीभवन ग्रन्थमालाया एकोनविंशे पुष्पे भागद्वयेन तृतीयतुरीये वसन्तराजकृत प्राकृतसञ्जीवनी, सदानन्दनिर्मितसुबोधिनीत्याख्ये व्याख्ये अपि नवम( अष्टम )परिच्छेदान्ते प्रकाशिते स्त ।

प्रकरणवशात् प्राकृतव्याकरणविषयकानामेषामन्येषामपि ग्रन्थाना विषये सामान्य परिचय प्रदर्श्यते—

१ प्राकृतप्रकाश —श्रीवररुचिप्रणीत प्राचीनतम । समयादि तु नोपलभ्यते। वररुचेर्नाम कात्यायनेन सह सम्बध्यते। कात्यायनेति वररुचेर्गोत्रनामेति केचित्। अद्ययावत् चतस्र प्राचीना व्याख्या सन्ति, यासु भामहरचिता मनोरमा प्रथमा कात्यायनकृता प्राकृतमञ्जरी पद्यमयी द्वितीया, वसन्तराजनिर्मिता प्राकृतसञ्जीवनी तृतीया, सदानन्दप्रणीता सुबोधिनी तुरीया। पञ्चमी तु नव्या प्रकाश्यमाना चन्द्रिकाख्या।

२ प्राकृतलक्षणम्—चण्डकृतम्। विभक्तिस्वरव्यञ्जनविधानात्मकविभागान्वित कलिकातानगरीत प्रकाशितचरम्। न विशेष समुपलभ्यते।

३ सिद्धहेमचन्द्रम्—हेमचन्द्रप्रणीतम्। विशाल स्पष्टमत्युपयोगि च। एतस्य ढुण्ढिकापरपर्याया प्राकृतप्रक्रियावृत्तिनाम्नी व्याख्या उदयसौभाग्यगणिनिर्मिता। एतस्य समयस्तु ११७२ ईशवीय इत्यैतिहासिका ।

४ सक्षिप्तसार —क्रमदीश्वरकृत । समयानुपलम्भ । अस्य तिस्रो व्याख्या श्रूयन्ते–जूमरनन्दिन्-कृता रसवती, चण्डीदेवशर्मकृता प्राकृतदीपिका, विद्याविनोदाचार्य-निर्मिता प्राकृतपादटीका। तिस्रोऽप्येता अमुद्रिता ।

५ प्राकृतव्याकरणम्—त्रिविक्रमदेवकृतम्। वाल्मीकिसूत्रव्याख्येति केचिन्मतम्, स्वसूत्रव्याख्येत्यन्यमतम्, हेमचन्द्रसूत्राणा वृत्तिरिति तृतीय मतम्। अस्य समयस्तु १२३६–१३०० ईशवीयशतकम्।

६ प्राकृतरूपावतार —सिंहराजनिर्मित । अय सिंहराज त्रिविक्रमग्रन्थस्थसूत्रानु-यायी १३००–१४०० ईशवीयशतकस्थ ।

७ षड्भाषाचन्द्रिका—लक्ष्मीधरनिर्मिता । लक्ष्मीधरस्तु सूत्रकर्तारमादिकविं वाल्मीकिमेव प्रतिपादयति। समयस्तु १५४१–१५६५ ईशवीय शतकम्। त्रिविक्रम सिंहराजलक्ष्मीधरैर्व्याख्यातानि सूत्राणि तु समानान्येव।

८ प्राकृतसर्वस्वम्—मार्कण्डेयकवीन्द्रकृतम्। आर्याछन्दोमय स्वोपज्ञवृत्तिसहितम्। विशेषस्तु द्रष्टव्योऽन्यत्र।

९ प्राकृतकल्पतरु —रामशर्मतर्कवागीशनिर्मित पद्यमय । एष लङ्केश्वरकृत-प्राकृतकामधेनुमाधारीकृत्य निर्मितवानिति स्वग्रन्थे प्रत्यपादयत्।

एतदतिरिक्ता अपि केचन ग्रन्था प्राकृतव्याकरणविषये सन्ति, आसन् वेति ग्रन्थकाराणामन्वेषकाणा चोद्धरणादिभि प्रतीयन्ते। सकर्तृकाणा तेषा नामोल्लेख

एवैतत्पूर्तयेऽलमिति। यथा—१ भरत (प्रायो नाट्यशास्त्रकर्ता), २ शाकल्य, ३ कोहल, ४ लङ्केश्वर प्राकृतकामधेनुकर्ता, ५ समन्तभद्र प्राकृतव्याकरणनिर्माता, ६ नरचन्द्र प्राकृतप्रबोधकर्ता, ७ कृष्णपण्डित (शेषकृष्ण) प्राकृतचन्द्रिकारचयिता, ८ वामनाचार्य प्राकृतचन्द्रिकाकृत्, ९ रघुनाथशर्मा प्राकृतानन्दकृत्, १० नरसिंह प्राकृतप्रदीपिकाया कर्ता, ११ चिन्नबोम्मभूपाल प्राकृतमणिदीपिकानिर्माता, १२ अप्पय्यदीक्षित (अप्पयज्वन्) प्राकृतमणिदीपकर्ता, १३ भामकवे षड्भाषाचन्द्रिका १४ दुर्गुणाचार्यस्य षड्भाषारूपमालिका, १५ नागोबानाम्न षड्भाषासुबन्तरूपादर्श, १ षड्भाषामञ्जरी, १७ षड्भाषावार्तिकम्, १८ षड्भाषासुबन्तादर्श, १९ शुभचन्द्रस्य प्राकृतव्याकरणम्, २० श्रुतसागरस्य औदार्यचिन्तामणि, २१ भोजस्य प्राकृतव्याकरणम् २२ पुष्पवननाथस्य प्राकृतव्याकरण चेति।

श्रीभामहनिर्मितमनोरमासहिते श्रीवाररुचे प्राकृतप्रकाशे सूत्राणा पूर्णा सख्या चतु शतसप्ताशीतिमिताऽस्ति। सञ्जीवनी-सुबोधिनी-चन्द्रिकाख्या चन्द्रिकया द्वाविंशति सूत्राण्यधिकानि सगृह्य प्रदर्शितानीति मिलित्वा नवाधिक पञ्चशत सूत्रसख्या भवति। भामहसम्मतसूत्रेषु नव सूत्राणि चन्द्रिकया न व्याख्यातानीति तत्पक्षे केवल पञ्चशत (५००) सूत्रसख्येति प्रतिपादनमत्र कौतुकायेत्यलम्।

श्रीवररुचिविषये तु केवलमिदमेव ज्ञातु शक्यते यदय प्राकृतव्याकरणकृत्सु प्राचीनतम इति। पाणिने सूत्राणामुपरि वार्तिकाना रचयिता कदाचिदयमपि भवितु युज्यते।

श्रीभामहविषये परिचयस्त्वित्थम्—ध्वन्यालोके श्रीमदानन्दवर्धनाचार्यैरलङ्कारशास्त्रविषयकग्रन्थप्रणेतृत्वेनास्योल्लेख कृत, भामहालङ्कारनाम्ना प्रायस्तत्पुस्तकं प्रसिद्धमेव। स एवाय न वेति प्रमाणान्तरानुपलब्धेर्न निर्णेतु पारयाम।

प्राकृतमञ्जरीनाम्ना प्राकृतप्रकाशस्य पद्यमय्या व्याख्याया कर्तु श्रीकात्यायनस्यापि विषये प्रमाणानुपलम्भादस्माकमौदासीन्यमेव। चन्द्रिकाव्याख्याया समुद्धृता पद्यपद्याशास्तत्रत्या उताहो तेऽन्यत्रस्था इति न शक्नुम कथयितुम्। चन्द्रिकाया तु सञ्जीवनीसुबोधिनीभ्यामुद्धृत्य सगृहीता इति न कल्पयितु पारयाम। तयोस्तु कुत सगृहीता इत्यस्मिन् विषये मौनमेव शरणीकुर्म।

श्रीवसन्तराजस्य प्राकृतसजीवनीटीकाकर्तुर्विषये तु वय सन्दिहाना एव। यतो हि काव्यवेमपालक कुमारगिरेर्नृपतिरेक स। विजयभूपते पुत्र शिवराजस्यानुज चन्द्रदेवमैथिलाज्ञया शकुनार्णवनिर्माता कश्चिदन्य। सञ्जीवनीकर्ता तूभयोरन्यतरोऽपि नास्तीति प्रतिभाति। किञ्चामुष्य विषये किमप्यैतिह्य नोपालभ्यत इतीव प्राकृतसञ्जीवनी सम्पादकैरस्मत्सुहृद्वर्यै स्वर्गीयश्रीबटुकनाथशर्मभिस्तथा हिन्दूविश्वविद्यालये वाराणसेये प्राध्यापकपदासीनै श्रीबलदेवोपाध्यायशर्मभिश्च स समुपेक्षित एव।

सुबोधिनीव्याख्याकर्तु श्रीसदानन्दस्यापि विषये ताभ्यां तत्रैव तथैवाचरितमिति प्रमाणोपन्यास विना न किञ्चिदपि वक्तु कोऽपि समर्थ स्यात्। क्वचिच्च भट्टकेशवपुत्रो

भट्टकेशवपिता सदानन्द इति समुल्लेखो दृश्यते। परं स एतद्विषयक एवेति कथं निर्णेतु प्रभवाम ।

अथ चन्द्रिकाख्या व्याख्येयं पञ्चमीति निश्चप्रचम्। एतन्निर्मातारस्तु हरदोई मण्डलान्तर्गत भगवन्तनगरवास्तव्या कान्यकुब्जब्राह्मणाश्चिकित्सकचूडामणि श्रीहरिहरशर्मणा पौत्रा, तद्द्वितीयपुत्रश्रीबदरीनाथशर्मणा पुत्रा, लब्धमहामहोपाध्यायादिसम्मान सूचकपदवीका श्रीपण्डितमथुराप्रसाददीक्षितमहोदया सन्ति, यैश्च वैद्यक कामशास्त्र व्याकरण पाली प्राकृत शास्त्रार्थ नाटकादिभिन्नभिन्नविषयेष्वनेके ग्रन्था प्रणीता सन्ति, यदन्तर्गता प्राकृतप्रकाशव्याख्येयं चन्द्रिका श्रीमता पुरस्ताद् विद्यते। एतत्कुलं विद्वत्कुलमिति कथयितुं शक्यते यतोऽस्मिन् कुले विद्वांस एव त्रय श्रीसदाशिववैकुण्ठनाथ रामनाथाख्या पुत्रा एतेषाम्। श्रीमदयोध्यानाथप्रभृतयो नव पौत्राश्च सन्ति येषु कतिपये विद्वत्कोटिमारूढा अन्ये चारुरक्षव। अधिकं तु 'भक्तसुदर्शन'नाटकभूमिकादिभ्योऽवगन्तव्यम्।

श्रीडबरालमहोदयै प्राकृतपदार्थनिवचन, भाषोपभाषा प्राकृतप्रकाशपुस्तकस्याधारश्च स्पष्टं स्वीये प्रास्ताविके कृतमिति तत एवावगन्तव्यम्। चन्द्रिकाप्रदीपयोराधारश्च ग्रन्थकृल्लेख एवेति न तत्रापि किमपि वक्तव्यमवशिष्टम्।

एतदुपोद्घातलेखनावसरे श्री प० ल० वैद्यमहोदयै सम्पादितं श्रीत्रिविक्रमदेवनिर्मितप्राकृतशब्दानुशासन—मनोरमासहितप्राकृतप्रकाश पुस्तकद्वयं तथा श्री प्रा० कृ० त्रिवेदिसम्पादितं षड्भाषाचन्द्रिकाख्य पुस्तकमेकमुपलब्धम्। ततश्च भूमिकासामग्रीसंग्रह इति धन्यवादार्हास्ते। विशेषत श्रीवैद्यमहोदया ।

शरीरस्यास्वास्थ्येन यत्रतत्र गन्तुमशक्यतया यै साहाय्यं सम्पादितं तेऽस्माकं भागिनेया आयुष्मन्त साहित्याचार्य-पुराणेतिहासादिशास्त्राचार्या एम्० ए० उपाधिभाज श्रीबलिरामशास्त्रिभारद्वाजा सरस्वतीभवन-वाराणसीपुस्तकालयोपाध्यक्षा, गुरुवद्गुरुपुत्रेष्विति न्यायेन गुरुतुल्या अपि शिष्यत्वं गता आयुष्मन्त साहित्याचार्या महामहोपाध्यायगुरुवरश्रीलक्ष्मणशास्त्रितैलङ्गसूनव श्रीजगन्नाथशास्त्रितैलङ्गा अथ च श्रीव्यङ्कटेशशङ्करतैलङ्गा एम्० ए०, बी० एल० महोदयाश्च शुभाशीर्वादैरभिनन्द्यन्ते। एवं श्रीरामचन्द्रझामहाशया अपि कथं विस्मरणीया स्यु ।

एतत्कार्यप्रोत्साहनादिना समुपकुर्वन्त चौखम्बासंस्कृतग्रन्थमाला चौखम्बाविद्याभवनग्रन्थमालाद्वयाध्यक्षा श्रीजयकृष्णदासगुप्तमहोदया शुभाभिराशीर्भिरभिनन्द्यन्ते। अन्ते च ज्ञानप्रदेभ्य पूज्यपादश्रीबालचन्द्रशास्त्रिमानवल्लितैलङ्गेभ्य प्रणामपरम्परां समर्प्य श्रीभगवन्तं काशीविश्वनाथं मनसि निधाय विरमामि पल्लवितादमुष्मादुपोद्घातप्रपञ्चादिति शम्।

वाराणसी पू, <br> वि० सं० २०१६, जन्माष्टमी

विदुषामाश्रव —<br>
**जगन्नाथशास्त्री होशिङ्ग**

# भूमिका

श्री परमात्मा के अनुग्रह से और मातृभूमि भारतवर्ष के सुपुत्रों के अथक प्रयत्नों से हमारा देश भारतवष इस समय एक स्वन त्र राष्ट्र है, जिसके प्रधान नेता माननीय श्री जवाहरलाल नेहरू जी तथा राष्ट्रपति देशरत्न डॉ० श्री राजेन्द्रप्रसा॒ जी हैं। ऐसे स्वन्त्र राष्ट्र में प्रसिद्ध होनेवाली सस्कृत पुस्तकों में भी राष्ट्रियता की झलक आवश्यक है। अत एव उनका राष्ट्रभाषा में अनुवाद होना भी न्यायसङ्गत है। सस्कृत पुस्तकों की भूमिका सस्कृतज्ञों के लिये सस्कृत में अवश्य उपादेय है। इसी प्रकार राष्ट्रभाषा हि दी में भी उसका होना उचित प्रतीत होता है। जैसा कि आंग्लशासनकाल में अधिकतर विद्वान् अग्रेजी में ही सब कुछ लिखते थे। कि तु वह समय लद गया। अब अपने देश की राष्ट्रभाषा में उसकी जननी सस्कृत भाषा के साथ साथ राष्ट्रभाषा हिन्दी में भी सब काय होने चाहिएँ—ऐसी इस तुच्छ लेखक की धारणा है। इसके पूव भी कभी कभी छोटी मोटी पुस्तकों में इस लेखक द्वारा वैसा प्रयत्न किया गया है। अत एव आज भी यह प्रयत्न किया जा रहा है तो उससे किसीको भी अरुचि न होनी चाहिए। प्रकृत विषय की ओर मुड रहे हैं।

श्री वररुचिकृत प्राकृतप्रकाश का चौखम्बा सस्कृत सीरीज, वाराणसी से यह चतुर्थ सस्करण प्रकाशित हो रहा है। इसके पूर्व अनेक उपकरणों से सुसज्जित कवल श्री भामहकृत मनोरमा नामक सस्कृत टीका के साथ इसका प्रकाशन हुआ था, जो श्री उदयराम शास्त्री डबराल महाशय द्वारा परीक्ष्य छात्रोपयोगी बनाया गया था। कि तु समय के परिवतन के साथ उसमें भी परिवर्तन की आवश्यकता प्रतीत होने लगी। ऐसे अवसर पर दूरदर्शी म० म० प० मथुराप्रस द दीक्षित जी ने 'चन्द्रिका' नामक एक नई सस्कृत टीका और 'प्रदीप' नामक सरल हिन्दी टीका लिखकर उसकी पूर्ति कर दी। उन टीकाओं के साथ यह पुस्तक कितनी उपादेय है—यह पाठकों के निर्णय के ही अधीन है। यह टीका सजीवनी और सुबोधिनी की अनुगामिनी होने से अष्टम (भामहानुसार नवम) परिच्छेद के अन्त तक ही है। अनुगामिनी होने पर भी यह समालोचिका भी है—यह विशेष स्थलों के निरीक्षण से स्पष्ट हो जायगा। अस्तु, दशम से

प्रकृत पुस्तक अर्थात् वररुचि सूत्र एव भामहवृत्ति मनोरमा के प्रकाशन का आधार— श्री डबराल महोदय की 'प्रास्तावना' से ज्ञात होता है कि वाराणसेय राजकीय सस्कृत पुस्तकालय—सरस्वती भवन की हस्तलिखित दो पुस्तकें है। प्रस्तुत सस्करण का आधार उपर्युक्त महाशय द्वारा सपादित पुस्तक ही है तथा नवीन व्याख्याओं का अवलम्ब स्वय व्याख्याकार लिखित पुस्तक है। अत एव इस विषय में विशेष चर्चा की आवश्यकता प्रतीत नहीं होती।

प्राकृत प्रकाश' इस पद में प्राकृत शब्द का अर्थ क्या है? इसमें विद्वानों के दो मत मालूम पड़ते हैं। प्रथम मत —प्रकृति अर्थात् प्रजागण, तत्सम्बन्धी अर्थात् उनके पारस्परिक व्यवहार या बोल चाल में आने वाली भाषा प्राकृत पद का अर्थ है। उन्हीके सिद्धान्तानुसार व्याकरण के नियमों से सस्कार पाकर शुद्ध व सुन्दर बनी भाषा 'सस्कृत' नाम धारण करता है। द्वितीय मत —प्राचीन समय, वैदिककाल से उपयुक्त होने वाली भाषा अर्थात् सस्कृत ही प्रकृति अर्थात् मूल भाषा है और उससे आई या बनी रूपान्तर को प्राप्त होने वाली भाषा प्राकृत है। पूर्वोत्तर मतों में कोई भी मत ग्राह्य माना जाय, तो 'प्राकृत' यह नाम एक भाषा का है जिसके अनेक भेद उपलब्ध हैं। उस प्राकृत भाषा के शब्दों के साधुत्व को प्रकाश करने वाला यह ग्रन्थ अपने प्राकृत प्रकाश' नाम को सार्थक बना रहा है।

इस प्राकृत भाषा के सिद्धान्तों को सूत्ररूप में निर्मित करने वालों मे वररुचि, वाल्मीकि, हेमचन्द्र एव त्रिविक्रमदेव के नाम सम्मुख आते हैं। उनमें वररुचि तथा हेमचन्द्र को सूत्रकर्ता मानने में कोई वाद विवाद नहीं। त्रिविक्रम देव के सम्बन्ध मे एक मत है कि सूत्र एव वृत्ति दोनों उनकी हैं और दूसरा मत है कि वाल्मीकि के सूत्रों पर इनकी व्याख्या है तथा तृतीय मत इस प्रकार है कि हेमचन्द्रप्रणीत सूत्रों पर इन्होंने व्याख्या की है। बहुत से विद्वान् आदिकवि वाल्मीकि कृत सूत्र मानने में पुष्ट प्रमाण के अभाव में सहमत नहीं हैं। परन्तु षड्भाषाचन्द्रिकाकार १६वीं शताब्दी के विद्वान् श्री लक्ष्मीधर अपने ग्रन्थारम्भ के पद्यों द्वारा श्री वाल्मीकि आदिकवि को ही सूत्र निर्माता स्वीकार करते हैं और प्रमाणों से यदि यह बात सिद्ध हो तो हमलोगों को भी कोइ आपत्ति नहीं है।

इस ग्रन्थ में भामहवृत्त्यनुसार बारह परिच्छेदों के सूत्रों की पूर्ण सख्या ४८७ है तथा चन्द्रिका टीकानुसार २२ सूत्र अधिक हैं। किन्तु ऊपर लिखी सख्या में से ९ सूत्रों की चन्द्रिका में उपेक्षा कर व्याख्या नहीं की गई है। अत उनके मत से ५०० सूत्र हैं। एव पूर्ण योग ५०९ सूत्रों का है। अस्तु, प्राकृतप्रकाश की ४ प्राचीन टीकाएँ हैं, यथा—१ मनोरमा, २ प्राकृतमञ्जरी, ३ प्राकृतसजीवनी तथा ४ सुबोधिनी। उनमें मनोरमा प्राचीनतम है जिसके रचयिता भामह हैं। वररुचि के समान भामह के सम्बन्ध में ऐतिहासिक सामग्री के अभाव में परिचय कराना अशक्य सा हो रहा है। दूसरी टीका प्राकृतमञ्जरी पद्यात्मक नवम परिच्छेदान्त तक ही है जिसके निर्माता श्री कात्यायन नामक विद्वान् हैं। वे कौन थे? किस समय में थे? इत्यादि भी अस्पष्ट है, जैसा कि पूर्व के सम्बन्ध में। तीसरी टीका प्राकृतसञ्जीवनी नामक है। यह भी नवम परिच्छेदान्त ही है। इसके रचयिता श्री वसन्तराज हैं। इनका परिचय भी पूर्ववर्ती व्याख्याकारों के समान दुर्लभ है। एव चौथी टीका श्रीसदानन्दनिर्मित सुबोधिनी है, जो नवम परिच्छेद के नवम सूत्र की समाप्ति के साथ समाप्त हुइ है। अन्तिम दोनों टीकाएँ वाराणसी के सरस्वतीभवन से 'सरस्वतीभवन-ग्रन्थमाला' के १९ वें पुष्प के दो भागों में प्रकाशित हुई हैं।

प्राकृतव्याकरणसम्बन्धी जो ग्रंथ आजतक प्रकाशित हो चुके हैं उनका संक्षिप्त परिचय देना आवश्यक समझकर उल्लेख नीचे किया जा रहा है।

| ग्रंथ | कर्ता | समय | व्याख्या |
|---|---|---|---|
| १ प्राकृतप्रकाश | वररुचि | परम प्राचीन | मनोरमा-मञ्जरी-सञ्जीवनी-सुबोधिनी ४ प्राचीन, चन्द्रिका १ नवीन, हिन्दीटीका १ प्रदीप |
| २ प्राकृतलक्षण | चण्ड | प्राचीन | × |
| ३ सिद्धहेमचन्द्र | हेमचन्द्र | ११७२ ई० | प्राकृतप्रक्रियावृत्ति या ढुण्ढिका उदयसौभाग्यगणिकृत |
| ४ संक्षिप्तसार | क्रमदीश्वर | × | रसवती, प्राकृतदीपिका, प्राकृतपादटीका-३ |
| ५ प्राकृतव्याकरण ( शब्दानुशासन ) | त्रिविक्रमदेव | १२३६-१३०० ई० | स्वोपज्ञवृत्ति |
| ६ प्राकृतरूपावतार | सिंहराज | १३००-१४०० ई० | × |
| ७ षड्भाषाचन्द्रिका | लक्ष्मीधर | १५४१-१५६५ ई० | आदिकवि वाल्मीकि के सूत्रों की अपनी व्याख्या का समर्थन |
| ८ प्राकृतसर्वस्व | मार्कण्डेय कवीन्द्र | × | आर्याछन्द में वृत्ति का लेखक |
| ९ प्राकृतकल्पतरु ( पद्यमय ) | रामशर्म तर्कवागीश | अर्वाचीन | × |

इसके सिवाय भरत, कोहल, शाकल्य, लङ्केश्वर ( प्राकृतकामधेनुकर्ता ), शेषकृष्ण पण्डित एवं अप्पय दीक्षित के नाम ग्रन्थकर्ता के रूप में आदरणीय हैं।

अन्त में पुनः प्रकृत पुस्तक में अनेक ग्रन्थों के निर्माता, कवि, महामहोपाध्याय पण्डित श्रीमथुराप्रसाद दीक्षित भगवन्तनगर हरदोई के निवासी का स्मरण उचित है, क्योंकि प्राकृत प्रकाश पर आपकी 'चन्द्रिका' नामक पञ्चम संस्कृत व्याख्या एवं 'प्रदीप' नामक सरल हिन्दी टीका भी है जिसका ऊपर उल्लेख हो चुका है।

जिसकी प्रेरणा से कार्य किया गया उस परमात्मा को प्रणाम। जिन लोगों ने साहाय्य दिया उन मित्र, सम्बन्धी आदि की मंगलकामना के साथ प्रस्तुत ग्रन्थमाला के अध्यक्ष गुप्त बन्धुओं को शुभाशीर्वाद देकर ज्ञानदाता पूज्यपाद श्री गुरुचरणों में नतमस्तक हो इस भूमिका लेखन कार्य से विराम लेते हैं।

वाराणसी
दि० २७-८-५९

भवदीय—
**जगन्नाथ शास्त्री होशिङ्ग**

# विषयसूची





॥ श्री ॥

# प्राकृतप्रकाशः

'मनोरमा'-'चन्द्रिका'-व्याख्याद्वयोपेतः।



## प्रथमः परिच्छेदः

जयति मदमुदितमधुकरमधुररुताकलनकूणितापाङ्गः।
करविहितगण्डकण्डूविनोदसुखितो गणाधिपतिः ॥ १ ॥
वररुचिरचितप्राकृतलक्षणसूत्राणि लक्ष्यमार्गेण।
बुद्ध्वा चकार वृत्तिं संक्षिप्तां भामहः स्पष्टाम् ॥ २ ॥

### आदेरतः ॥ १ ॥

अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्याम आदेरतः स्थाने तद्भवतीत्येव वेदितव्यम्। आदेरित्येतदाऽऽपरिच्छेदसमाप्तेः। अत इति च आकारविधानात्[1]। अत इति तकारग्रहणं सवर्णनिवृत्त्यर्थम् ॥ १ ॥

याऽऽर्द्रालक्तकरक्तचन्दनमधुव्राताधरद्योतिनी
विद्युत्कुङ्कुमरत्नकुक्कुटशिखाखद्योतभाभ्राजिनी।
उल्काकोकिलदृक्चकोरनयनाशोकद्युतिस्वामिनी
सेयं विष्णुपदप्रभा विजयते संसारतस्तारिणी॥

आदेरतः—इत ऊर्ध्वम् आपादपरिसमाप्तेः आदेरित्यधिक्रियते। अत इति तु 'अदातो यथादिषु वे'त्यतः प्राक् ॥ १ ॥

यह अधिकारसूत्र है। पादसमाप्ति तक जो कार्य विहित होगा वह आदि को ही होगा और 'अदातो यथादिषु वा' के पूर्व २ अत ह्रस्व अकार को कार्य होगा ॥ १ ॥

### आ समृद्ध्यादिषु वा ॥ २ ॥

समृद्धि-इत्येवमादिषु शब्देष्वादेरकारस्याऽऽकारो भवति वा। समिद्धी सामिद्धी[2]। ( १–२८ ऋ = इ, ३–१ दलोप, ३–५० द्वित्वम्, ३–५१ ध् = द्, ५–१८ दीर्घ ) पअडं, पाअडं। ( ३–३ रलोपः, २–२ कलोप, २–२०

---

१ क्वचिद्-आ आकारविधानाद् पाठः। २ 'अन्त्यस्य हलः' ४–६ इति सोर्लोपः, एवं सर्वत्र सोर्लोपे बोध्यम्।

ट् = ड्, ५-३० बिन्दु ) अहिजाई, आहिजाई। ( २-२७ भ् = ह, २-२ तलोप, ५-१८ दीर्घ ) मणसिणी, माणंसिणी। ( २-४२ न् = ण्, ४-१५ बिन्दु, ३-३ व्लोप, ३-४२ न् = ण्) [1]पडिवआ, पाडिवआ। ( ३-३ र्लोप, २-१५ प् = व्, २-२ द्लोप ) सरिच्छ, सारिच्छं। (१-३१ ऋ = रि, २-२ द्लोप, ३-३० क्ष् = च्छ्, ५-३० बिन्दु ) पडिसिद्धी, पाडिसिद्धी। (३-३ र्लोप, २-४३ ष् = स्, ३-१ द्लोप, ३-५० द्वित्वम्, ३-५१ ध् = द्, ५-१८ दीर्घ ) पसुत्तं, पासुत्तं। ( ३-३ र्लोप, ३-१ प्लोप ३-५० त्द्वित्वम्, ५-३० बिन्दु ) पसिद्धी, पासिद्धी। ( ३-३ र्लोप, २-२ द्लोप, ३-५० द्वित्वम्, ३-५१ ध् = द्, ५-१८ दीर्घ ) अस्सो, आसो[2]। ( २-४३ श् = स्, ३-३ व्लोप, ३-५८ द्वित्वम्[3], ५-१ ओ ) समृद्धिप्रकटाभिजातिमनस्विनीप्रतिपद[4]सदृक्षप्रतिषिद्धि[5]प्रसुप्तप्रसिद्धयश्वा । आकृतिगणोऽयम् ॥ २ ॥

**आ समृद्ध्यादिषु वा**—समृद्ध्यादिषु शब्देषु आदिभूतस्य ह्रस्वाकारस्य विकल्पेन आकारः। सामिद्धी, समिद्धी। समृद्धिः। पाडिसिद्धी, पडिसिद्धी। प्रतिषिद्धिः। पासिद्धी, पसिद्धी। प्रसिद्धिः। माणसिणी, मणसिणी। मनस्विनी। आहिजाअ, अहिजाअ। 'कगचजे'त्यत्र प्रायोग्रहणात् न जकारलोपः। केचित्तु आहिआअ, अहिआअ इति वदन्ति। अभिजातम् इति। पासुत्त, पसुत्त। प्रसुप्तम्। पाडिवआ, पडिवआ। प्रतिपद्। पाअड, पअड। प्रकटम्। सारिच्छ, सरिच्छ। सदृक्षम्। वाशब्दस्य व्यवस्थितविकल्पत्वात् क्वचिन्नित्यमात्वम्। वाससअ। वर्षशतम्। पासिस्स। प्रस्विन्नम्। सासू। श्वश्रूः। समृद्ध्यादिगणोक्त अश्वशब्दपाठस्तु चिन्त्य एव।

समृद्धिः प्रतिषिद्धिश्च प्रसिद्धिश्च मनस्विनी।
अभिजात प्रसुप्त च प्रतिपद् प्रकट तथा॥
सदृक्ष चैवमादि स्यात् समृद्ध्यादिगण किल॥ २॥

समृद्ध्यादिक शब्दों के आदिस्थ ह्रस्व अकार को विकल्प से आकार हो जाता है। ( समृद्धि ) न १० से इकार, ५२ से अन्त्य इकार को दीर्घ, ६० से सुलोप, आ समृ० इससे आत्व। सामिद्धी, पक्ष में समिद्धी। ( प्रतिषिद्धि ) न ५ से रलोप, २६ से सकार, ५२ से दीर्घ, ६० से सुलोप, आत्व, प्रतिसरवेतस २।८ से डकार। पाडिसिद्धी, पडिसिद्धी। एवम् ( प्रसिद्धि ) का पूर्ववत् पासिद्धी, पसिद्धी। ( मनस्विनी ) न ५ से वलोप, ६१ से अनुस्वार, २५ से णकार, प्रकृत सूत्र से दीर्घ। माणसिणी, मणसिणी। ( अभिजात ) न २३ से भ को हकार, २ से जकार, तकार का लोप,

---

१ प्रत्यादौ डः ८। १। २०६ इति हेमसूत्रेण तो डः। केचित्तु 'प्रतिसरवेतसपताकासु डः' २-८ इति सूत्रे प्रतिसरादयः प्रत्यादीनामुपलक्षणमिति वदन्ति। २ न दीर्घाऽनुस्वारात् ८। २। ९२ इति हेमसूत्रेण द्वित्वनिषेधः। ३ द्वित्वाभावपक्षे असो। ४ क पुस्तके प्रतिपद् पाठस्तत्र-( ४-७ द् = आ )। ५ यत्र प्रतिस्पर्द्धिपाठस्तत्र (३-३७ स्प = सि) इति विशेषः।

आ समृ० से दीर्घ, ६२ से अनुस्वार। आहिआअ, अहिआअ। ( प्रसुप्तम् ) पूर्वोक्त न ५+२+६+६२ से सिद्ध कर लेना। पासुत्त, पसुत्त। ( प्रतिपत् ) पाडिवआ, पडिवआ, पूर्वोक्त सूत्रों से सिद्ध है। प्रतिवतसपताकासु ड इससे डकार आदेश हो जाता है। ( क्या भामह पण्डित जी पडिवआ का साधुत्व करते हुये यह सूत्र ही भूल गये थे, अथवा प्रेस दोष से रह गया ) ( प्रकटम् ) ( पाअड, पअड ) न ५+२+१९+६० से सिद्ध हो जाता है ) ॥ २ ॥

नोट—( १० ) इदृष्यादिषु। ( ५२ ) सुभिसुप्सु दीर्घ। ( ६० ) अन्त्यस्य हल। ( ५ ) सर्वत्र लवराम्। ( २६ ) शषो स। ( ६१ ) वक्रादिषु। ( २५ ) नो ण सर्वत्र। ( २३ ) खघथधभा ह। ( २ ) कगचजतदपयवा प्रायो लोप। ( ६२ ) नपुसके सो र्बिन्दु। ( ६ ) शेषादेशयोर्द्वित्वमनादौ। ( १९ ) टो ड ॥ २ ॥

**इदीषत्पक्वस्वप्नवेतसव्यजनमृदङ्गाऽङ्गारेषु* ॥ ३ ॥**

**ईषदादिषु शब्देषु आदेरत स्थाने इकारादेशो भवति। वेति निवृत्तम्। इसि[1]। ( ४–१ ई = इ, २–४३ ष् = स्, ४–६ अन्त्यलोप ) पिक्क। (३–३ व्लोप, ३–५० क्द्वित्वम्, ५–३० बिन्दु ) सिविणो[2]। (३–३ व्लोप, ३–६२ विप्रकर्ष इकारता च, २–४२ न् = ण्, ५–१ ओ) वेडिसो। (२–८ त् = ड्, ५–१ ओ) वअणो। (३–२ य्लोप, २–२ ज्लोप, २–४२ न् = ण्, ५–१ ओ ) मिइङ्गो[3]। ( १–२८ ऋ = इ, ४–१७ बिन्दु, २–२ द्लोप, ५–१ ओ ) इङ्गालो। ( ४–१७ बिन्दु, २–३० र् = ल्, ५–१ ओ ) ॥ ३ ॥**

ईदीषत्०—ईषदादिषु शब्देषु आदेरत स्थाने इकार स्यात्। चकारादनादेरपि। ( ईषत् ) ईसि–ईषद्शब्दात् सुप्रत्यये अन्त्यस्य हल ४।६ इति सो, दकारस्य च लोपे शषो स २।४३ इति सकार। इदीषत्० अनेन अनन्त्यस्यापि सकारोत्तरस्याकारस्य इकार। यत्तु भामहेन ईषद आदिभूतस्य दीर्घेकारस्य इकार कृतस्तच्चिन्त्यम्, अत इत्युक्तेस्तस्य अकाररूपाभावात्। किञ्च पुन सकारोत्तरस्याकारस्येकार केन स्यात्। न च भवन्मयेऽपि आदेरित्यधिकारात्, सकाराकारस्य अनादित्वात्कथमिकार, चकारग्रहणादनादेरपीत्युक्ते। अन्यथा वेतसशब्दे मध्यस्थितस्य तकाराकारस्य इकार कथ स्यात्। किंच ईषद ईसि–इति रूपम्, न तु इसि, इति। तत्र ईकारस्य ह्रस्वेकारविधायकसूत्राभावात्। ( पक्वम् ) पिक्क सर्वत्र लवरामिति वलोप, शेषादेशेति कद्वित्वम्, अनेन इकार। पिक्क। ( स्वप्न ) सिविणो। पूर्ववद् वलोप, आदिस्थत्वान्न सस्य द्वित्वम्, प्रकृतेन इत्वम्। इत् श्री ह्री ३।६२। इत्यादिना पकारनकारयोर्विप्रकर्ष पूर्वस्य

* सूत्रेऽस्मिन् वसन्तराजमतानुयायि'चन्द्रिका'–व्याख्याकृ मतेऽ ते च' इति वर्णोऽधिक।

१ 'इत्वमीषत्पदे कैश्चिदोकारस्यापि चेष्यते। इसि चुम्बिअमित्यादि रूप तेन हि दृश्यते।' इत्यभियुक्ता। हेमस्तु ईसि इति मन्यते, तथा च शाकुन्तले 'ईसीसि चुम्बिआईं' इति प्रायो दीर्घादिर्लभ्यते। २ स्वप्ननीव्योर्वा ८। १। २५९। सिमिणो, सिविणो। हे०। ३ इदुतौ वृष्टिवृष्ट पृथङ् मृदङ्ग नप्तृके ८। १। १३७ तेणाहिट्ठ गीअ मुइङ्ग करताडिय मिइङ्ग। हे०। का० पु० मुइङ्ग पाठे १–२९ सूत्रेणोत्व बोध्यम्, तत्र गणे आदिग्रहणात्।

पकाराकारस्य चेत्वम् । पो व । नो ण सर्वत्रेति नस्य णत्वे । अत ओत् सो । सिविणो इति । ( वेतस ) वेडिसो । प्रतिवेतमपताग्रासु ड इति ड । यत्तु भामहेन प्रतिसरेति पठितम् , तन्नये पडिहअ। पडिवअण इत्यादिका कथ सेत्स्यन्तीति विभावयन्तु सुधिय । साधुत्व लोकभाषाया स्फुटीभविष्यति । ( व्यजनकम् ) विअणअ । (मृदङ्ग ) मुइगो । (अङ्गार ) इङ्गाल । चकारग्रहणाद् मज्झिम, चरिम इत्यादि ॥ ३ ॥

ईषदादिक शब्दों मे आदिस्थ अकार को इकार होता है। जिस शब्द मे आदिस्थ अकार न होगा वहाँ मध्यस्थ को ही इकार हो जायगा, उदाहरणों में स्पष्ट है। (ईषत्) न २६ से षकार को सकार, ६० से सु का और ईषद् के दकार का लोप, प्रकृत सूत्र से अकार को इकार, ईसि इति। (पक्कम्) न ५ से वलोप, ६ से द्वित्व, इत्व, पिक्क। (स्वप्न) न ५ से वलोप, इदीषत्० से आदिस्थ अकार को इकार। इत् श्रीह्री० इससे पकार नकार का विप्रकर्ष और पकारस्थ अकार को इकार। न १८ से पकार को वकार, २५ से नकार को णकार, ४२ से ओकार, सिविणो। (वेतस) प्रतिवेतस० से डकारादेश, प्रकृत सूत्र से मध्यस्थ अकार को इकार। न ४२ से ओकार, वेडिसो। (व्यजनकम्) न ४ से यलोप। प्रकृत इदीषत् से इकार। न २ से जकार और ककार का लोप। २५ से णकार। ६२ से अनुस्वार, विअणअ। (मृदङ्ग) न ११ से ऋ को उकार। उक्त प्रकृत सूत्र से इकार न २ से दलोप। ४२ से ओकार, मुइङ्गो। (अङ्गार) न ६४ से रेफ को लकार। उक्तसूत्र से इकार, ४२ से ओकार। इङ्गालो ॥ ३ ॥

नोट—न (२६) शषो स। (६०) अन्त्यस्य हल। (५) सर्वत्र लवराम्। (६) शेषादेशयोर्द्वित्वमनादौ। (१८) पो व। (२५) नो ण सर्वत्र। (४२) अत ओत्सो। (४) अधो मनयाम्। (२) कगचजतदपयवा प्रायो लोप। (६२) नपुसके सोर्बिन्दु। (११) उदृत्वादिषु। (६४) हरिद्रादीना रो ल ॥ ३ ॥

## लोपोऽरण्ये ॥ ४ ॥

**अरण्यशब्दे आदेरतो लोपो भवति। रण्णं। ( ३–२ यलोप , ३–५० द्वित्वम् , ५–३० बिन्दु ) ॥ ४ ॥**

लोपोऽरण्ये—अरण्यशब्दे आदेरकारस्य लोप स्यात्। अरण्य। रण्ण। कथम् इदानीमित्यस्य 'दाणि' इति। योगविभागात्सेत्स्यति। लोप ।४। आदेर्लोप स्यात्। इतीकारलोपे, नो ण सर्वत्रेति णकारे, इदीत पानीयादिषु इतीत्त्वे, मो बिन्दुरित्यनुस्वार । तस्य मासादित्वाल्लोप । दाणि इति ॥ ४ ॥

अरण्य शब्द के आदिभूत अकार का लोप हो। (अरण्यम्) इससे अकार का लोप हो गया। न ४ से यकार का लोप। ६ से अवशिष्ट णकार को द्वित्व। ३७ से अन्त्य मकार को अनुस्वार। रण्ण। इदानीम् का दाणि। योगविभाग करके 'लोप'—यह सूत्र मानना। अरण्य शब्द के अतिरिक्त भी कहीं लोप हो। इससे इकार का लोप। न २५ से णकार। इदीत पानीयादिषु से ह्रस्व इकार। मकार को अनुस्वार। मासादित्वाल्लोप दाणि। इति ॥ ४ ॥

## ए[1] शय्यादिषु ॥ ५ ॥

**शय्या इत्येवमादिषु शब्देषु आदेरत एकारादेशो भवति। सेज्जा। (२-४३ श् = स्, ३-१७ य्य् = ज्, ३-५० द्वित्वम्) सुन्देर। (४-१७ बिन्दु, १-४४ औ = उ, ३-१८ र्य् = र्, ५-३० बिन्दु) उक्केरो। (३-१ त्लोप, ३-५० द्वित्वम्, ५-१ ओ) तेरहो। (३-३ र्लोप, २-२ य्लोप, ४-१ ओलोप, २-१४ द् = र्, २-४४ श् = ह्, ५-१ ओ) अच्छेर। (४-१ आ = अ[2], ३-४० श्च् = छ्, ३-५० द्वित्वम्, ३-५१ छ् = च्, ३-१८ र्य् = र्, ५-३० बिन्दु) पेरन्त। (३-१८ र्य् = र्, ५-३० बिन्दु) वेल्ली। (३-३ ल्लोप, ३-५० द्वित्वम्) शय्यासौन्दर्योत्करत्रयोदशाश्चर्य-पर्यन्तवल्ल्य ॥ ५ ॥**

ए च शय्यादिषु—शय्याशब्देन सदृशा शय्यादय, सादृश्य च सयुक्तत्वेन। शय्याशब्दसदृशेषु आदेरत एत्व स्यात्। चकारादनादेरपि। (शय्या) अनेन आदे रकारस्य एत्वे, य इ यस्य जकारे तस्य द्वित्वे, सकारे च कृते। सेज्जा। (सौन्दर्यम्) सुन्देर। (वल्ली) वेल्ली। (कियत्) केत्तिअ। (यावत्) जेत्तिअ। (तावत्) तेत्तिअ। (उत्कर) उक्केरो। (त्रयोदश) तेरहो। (आश्चयम्) अच्छेर। (स्तोकमात्रम्) थोअमेत्त। (पर्यन्तम) पेरन्त। (वृन्तम्) वेण्ट।

शय्यासौन्दर्यपर्यन्तवल्लीत्रित्तिअन्तोत्करा ।
आश्चर्यमात्रवृन्तानि ज्ञेय शय्यादिरीदृश ॥ ५ ॥

**शय्यादिक शब्दों के आदि अकार को एकार हो। चकार ग्रहण से अनादि अकार को भी एकार होगा। शय्या०, इससे एकार। न २६ से शकार को सकार। ४ से अध स्थ एक यकार का लोप। 'र्यशय्याभिमन्युषु ज' इससे जकार। न ६ से जकार को द्वित्व। सेजा। (सौन्दर्यम्) इसमें मध्यस्थ अकार को एकार। न ६५ से औकार को उकार। न ४ से यलोप। न ३७ से मकार को अनुस्वार। सुन्देर। (वल्ली) प्रकृत सूत्र से एकार। वेल्ली। (कियत्) 'किम क' ५।५९ इससे कादेश। प्रकृत से एकार। 'इष्टौ किंयत्तदेतेभ्य परिमाणे त्तियड्डहौ' इस इष्टि से परिमाण अर्थ में त्तिय प्रत्यय। न ६० से अन्त्य तकार का लोप। सुप्रत्यय। केत्तिय। एवम् (यावत्) से त्तिय प्रत्यय। एत्व। न २४ से यकार को जकार। जेत्तिय। एवम् (तावत्) से पूर्ववत्। तेत्तिय। (उत्कर) न ३ से तकार लोप। न ६ से ककार को द्वित्व। न ५२ से ओकार। उक्केरो। (आश्चर्यम्) न ५८ से आकार को अकार। न ६४ से श्च को छकार। न ६ से छकार को द्वित्व। न ७ से छकार को चकार। मध्यस्थ छकारोत्तरवर्त्ती अकार को प्रकृत सूत्र से एकार। तूर्यधैर्य० ३।१८ से रेफादेश। न ३७ से अनुस्वार। अच्छेर। (त्रयोदश) न ५ से रेफ-लोप। प्रकृत से एत्व। 'सख्यायाश्च' से दकार को रेफादेश। न २७ से शकार को हकार। न ४२ से ओकार। 'लोप साचो**

---

१ वस तराजमतानुयायि'चन्द्रिका' व्याख्यानुरोधादत्र 'च' इति वर्णोऽपेक्षित ।

२ ह्रस्व सयोगे ८। १। ८४। तित्थम्। हे० एव सर्वत्र बोध्यम्।

यकारस्य' इससे यकार, ओकार का लोप । तेरहो । ( स्तोकमात्रम् ) न २९ से थकार । न २ से कलोप । न ५८ से आकार को अकार । एत्व प्रकृत सूत्र से। न ५ से रेफ लोप। न ६ से तकार को द्वित्व । न ३७ से अनुस्वार । थोअमेत्त । ( पर्यन्तम् ) शय्यादिषु वा से एकार । तूर्यधैर्य० से यकार का लोप । न ३७ से अनुस्वार । पेरन्त । ( वृन्तम् ) न ९ से ऋकार को अकार । 'तालवृन्ते ण्ट ' से 'न्त' को 'ण्ट' आदेश । प्रकृत सूत्र से एकार, न ३७ से अनुस्वार । वेण्ट । प्राय शय्यादिक उक्त मात्र हैं ॥ ५ ॥

नोट—न (४) अधो मनयाम् ।(६)शेषादेशयोर्द्वित्वमनादौ।६२ नपुंसके सोर्बिन्दु । ( २५ ) नो ण सर्वत्र । ( २६ ) शषो स । ( ६५ ) उत्सौन्दर्यादिषु । ( ६० ) अन्त्यस्य हल । ( २४ ) आदेर्यो ज । ( ३ ) उपरि लोप कगडतदपषसाम् । ( ४२ ) अत ओत् सो । ( ५८ ) अदातो यथादिषु वा । ( ६४ ) श्रत्सप्सा छ । ( ७ ) वर्गेषु युज पूर्व । ( ५ ) सर्वत्र लवराम् । (३७) दशादिषु ह । (२९) स्तस्य थ । (९) ऋतोऽत् ।

## ओ बदरे देन ॥ ६ ॥

**बदरशब्दे दकारेण सहादेरत ओत्वं भवति । बोरं (५-३० बिन्दु ) ॥६॥**

ओ बदरे देन—बदरशब्दे दकारेण सह आदेरत ओत्व स्यात् । बोर । ( बदरम् ) लवणशब्देऽपि वकारेण सह अकारस्य ओत्वमिष्यते । लोण । आर्द्रार्पितशब्दयोस्तु विकल्पेन इष्यते । ओद्द, अद्द । ( आर्द्रम् ) । ओप्पिअ, अप्पिअ । ( अर्पितम् ) । इयमिष्टिरिति वसन्तराजसदानन्दौ । पुस्तकान्तरे तु सूत्रमेवम् ॥ ६ ॥

वदर शब्द में दकार के सहित आदिवर्णस्थ अकार को ओकार हो तो बकारोत्तर अकार और दकार के स्थान में ओकार होगा । न ३७ से अनुस्वार । ( वदरम् ) बोर । वसन्तराजादिक लवण शब्द में प्रयोगप्रामाण्य से ओत्व मानते हैं, अन्य के मत से 'लवण०' यह ७ वाँ वररुचि कृत सूत्र है । अस्तु, पूर्ववत्साधुत्व जानना । ( लवणम् ) लोण । आर्द्रा-अर्पित शब्द में विकल्प से ओकार होगा । (आर्द्रा) न ५ से नित्य रेफद्वय का लोप, अथवा 'द्रे रो वा' इससे विकल्प से लोप । न ५८ से अकार । न ६ से दकार को द्वित्व, न ३७ से अनुस्वार । ओद्द । पक्ष में अद्द । एवम् ( अर्पितम् ) ओप्पिअ, अप्पिअ । साधुत्व पूर्ववत् जानना ॥ ६ ॥

## लवणनवमल्लिकयोर्वेन ॥ ७ ॥

**लवणनवमल्लिकयोरादेरतो वकारेण सह ओकार स्यात् । लोणं । ( ५-३० बिन्दु ) णोमल्लिआ ( २-४२ न् = ण् , २-२ क्लोप ) ॥ ७ ॥**

लवणनवमल्लिकयोर्वेन—एतयोर्वकारेण सह आदेरत ओत्व स्यात् । लोण ( लवणम् ) । णोमल्लिआ ( नवमल्लिका ) ॥ ७ ॥

लवण और नवमल्लिका शब्द में वकार के सहित आदि अकार को ओकार होगा । ( लवणम् ) लोण । ( नवमल्लिका ) न २५ से नकार को णकार । न २ से ककार लोप । प्रकृत सूत्र से ओत्व । णोमल्लिआ ॥ ७ ॥

## मयूरमयूखयोर्य्वा वा ॥ ८ ॥

**मयूर मयूख इत्येतयोर्यूशब्देन सहादेरत ओत्वं वा भवति । मोरो,**

**मऊरो । ( ५–१ ओ ) मोहो, मऊहो । ( २–२७ ख् = ह् , ५–१ ओ ) उभयत्र, ( पक्षे २–२ यलोप ) ॥ ८ ॥**

मयूरमयूखयोर्य्वा वा—य्वा इति तृतीयान्तम् । एतयोर्'यू' इत्यनेन सह आदेरत ओत्व वा स्यात् । मोरो । मऊरो ( मयूर ) । मोहो । मऊहो ( मयूख ) ॥ ८ ॥

मयूर–मयूख शब्द में 'यू' के सहित आदि वर्णस्थ अकार को ओकार होगा । ( मयूर ) न ४२ से सु को ओकार । मोरो । पक्ष में न २ से यलोप । मऊरो । एवम् ( मयूख ) यू और मकाराकार को ओकार । न २३ से खकार को हकार, मोहो, पक्ष में मऊहो, साधुत्व पूर्ववत् ॥ ८ ॥

## चतुर्थीचतुर्दश्योस्तुना ॥ ९ ॥

**एतयोस्तुना सहादेरत ओत्व भवति वा । चोत्थी, चउत्थी । ( ३–३ र्लोप , ३–५० थ्द्वित्व, ३–५१ थ् = त् , पक्षे २–२ तलोपो विशेष ) चोद्दही, चउद्दही[1] । ( २–४४ श् = ह् , शेष पूर्ववत् ) ॥ ९ ॥**

चतुर्थीचतुर्दश्योस्तुना—एतयो तु इत्यनेन सह आदेरत ओत्व वा स्यात् । चोत्थी । चउत्थी ( चतुर्थी ) । चोद्दसी, चउद्दसी ( चतुर्दशी ) ॥ ९ ॥

चतुर्थी और चतुर्दशी शब्द में 'तु' के सहित आदि अकार को ओकार हो । चतुर्थी० इससे ओकार । न ५ से रेफलोप । न ६ से थकार को द्वित्व । न ७ से थकार को तकार । चोत्थी, पक्ष में चउत्थी । ( चतुर्दशी ) न २६ से शकार को सकार । रेफलोप । दकार को द्वित्व पूर्ववत् । चोद्दसी, चउद्दसी ॥ ९ ॥

नोट—( ३७ ) मो बिन्दु । ( ५ ) सर्वत्र लवराम् । ( ५८ ) अदातो यथादिषु वा । ( ६ ) शेषादेशयोर्द्वित्वमनादौ । ( २१ ) नो ण सर्वत्र । ( २ ) कगचजतदपयवा प्रायो लोप ( ४२ ) अत ओत् सो । ( २३ ) खघथधभा ह । ( ७ ) वर्गेषु युज पूर्वं । ( २६ ) शषो स । ( ६२ ) नपुंसके सोर्बिन्दु ॥ ९ ॥

## अदातो यथादिषु वा ॥ १० ॥

**अत इति निवृत्तम् , स्थान्यन्तरनिर्देशात् । यथा इत्येमवादिषु आत स्थाने अकारादेशो भवति वा । जह, जहा । तह, तहा । ( २–२७ य् = ह् ) । पत्थरो, पत्थारो । (३–३ र्लोप , ३–१२ स्त् = थ् , ३–५० थ्द्वित्वम्, ३–५१ थ् = त् , ५–१ ओ) पउअं, पाउअं । ( ३–३ र्लोप , १–२९ ऋ = उ, २–२ कतयोर्लोप, ५–३० बिन्दु ) तलवेण्टअं, तालवेण्टअं । ( १–२८ ऋ = इ[2], १–१२ इ = ए[3], ३–४५ न्त = ण्ट, २–२ क्लोप , ५–३० बिं० )**

---

[1] क० पु० चतुर्थी–तत्र चोत्थी, चउत्थी । चतुर्दशी–तत्र चोद्दही, चउद्दही । पाठ ।

[2] ऋष्यादेराकृतिगणत्वात् । [3] सर्योगपरत्वेन पिण्डसमत्वात् । 'इदेदो वृत्ते' ८ । १ । १३९ विण्ट, वेण्ट, वोण्ट । है० ।

उक्खअ, उक्खाअ। ( ३-१ त्लोप, ३-५० खद्वि०, ३-५१ ख् = क्, २-२ त्लोप, ५-३० बि० ) चमर, चामर। ( ५-३० बि० ) पहरो, पहारो। (३-३ र्लोप, ५-१ ओ) चडु, चाडु। (२-२० ट् = ड्) दवग्गी, दावग्गी। ( ३-२ न्लोप, ३-५० द्वि०, ५-१८ दीर्घ ) खइअ, खाइअ। ( २-२ द्लोप त्लोपश्च, ५-३० बि० ) सठविअ, सठाविअ। ( ८-२६ स्था = ठा, ३-५६ द्वित्वनिषेध, २-१५ प् = व, २-२ तलोप, ५-३० बिं० ) हलिओ, हालिओ। ( २-२ कलोप, ५-१ ओ )। यथातथाप्रस्तारप्राकृततालवृन्त-कोत्खातचामरप्रहारचाटुदावाग्निखादितसस्थापितहालिका ॥ १० ॥

अदातो यथादिषु वा—यथादिषु शब्देषु आदेराकारस्य अकार स्यात्, वा शब्देऽनुवर्तमानेऽपि पुनर्वाग्रहणादनादरग्याकारस्याकार। जह, जहा। तह, तहा। पवहो, पवाहो। पहरो पहारो। पअअ, पाअअ। पत्थरो, पत्थारो। तलवेण्टअ, ताल-वेण्टअ। उक्खओ, उक्खाओ। चमर, चामर। पहरो, पहारो। चडु, चाडु। दवग्गी, दावग्गी। खइअ, खाइअ। सठविअ, सठाविअ। पत्थवो, पत्थावो। परिआओ, पारिआओ। हलिओ, हालिओ। वाग्रहणेन व्यवस्थितविभाषाग्रहणाद् यथादिष्वेव विकल्प। ब्राह्मणादौ तु नित्यमकार। बम्हणो। ठविओ। पत्त। पसू। अन्छरिअ। पुव्वण्हो। मज्झण्णो। अवरण्हो। इत्यादि ॥ १० ॥

यथादिक शब्दों में आदि अथवा अनादि दीर्घ आकार को ह्रस्व अकार होगा। वाग्रहण अनुवृत्ति से सिद्ध था, फिर जो 'वा' ग्रहण किया है इससे आदिस्थ एव अनादिस्थ आकार का ग्रहण करना। उदाहरण—( यथा ) न २३ से थकार को हकार। उक्त सूत्र से अकार। न २४ से जकार। जह, पक्ष में जहा। एवम् ( तथा ) तह, तहा। ( प्रवाह ) न ५ से रेफ लोप। न ४२ से ओकार। विकल्प से अकार। पवहो, पवाहो। ( प्रहार ) पूर्ववत्। रेफ लोप। ओकार। विकल्प से अकार। पहरो, पहारो। प्राकृत शब्द का पाउड भी प्रयोग होता है। ऋत्वादि गण में मान कर उकार। कृत शब्द के तकार को डकार। कड देवेहिं, पाउड भासाए। इत्यादि प्रयोग बहुलाश में मिलते हैं। ( प्राकृतम् ) न ५ से रेफ लोप। न ९ से ऋकार को अकार। न २ से ककार तकार का लोप। न ३७ से मकार को अनुस्वार। प्रकृत सूत्र से विकल्प से आदिस्थ पकाराकार को अकार। पअअ, पाअअ। ( प्रस्तार ) न ५ से रेफ लोप। २९ से स्त को थकार। न ६ से थकार को द्वित्व। न ७ से थ को तकार। प्रकृत सूत्र से आकार को अकार विकल्प से। न ४२ से ओकार। पत्थरो, पत्थारो। ( तालवृन्तकम् ) न १० से ऋकार को इकार। नं ६५ से इकार को एकार। तालवृन्ते ण्ट से न्त को ण्ट आदेश। न २ से कलोप। न ३७ से अनुस्वार। विकल्प से अकार। तलवेण्टअ, तालवेण्टअ। ( उत्खातम् ) न ३ से त लोप। न ६ से द्वित्व, ७ से ककार। न २ से द्वितीय तकार का लोप। ३७ से अनुस्वार। प्रकृत सूत्र से अकार। उक्खअ, उक्खाअ। ( चामरम् ) प्रकृत सूत्र से पाक्षिक अकार। अनुस्वार पूर्ववत्। चमर, चामर। ( प्रहार ) न ५ से रेफ लोप। ४२ से ओकार।

अदातो से अकार । पहरो, पहारो । ( चाटु ) न १९ से ड । विकल्प से अकार । चडु, चाडु । ( दावाग्नि ) न ४ से न लोप । न ६ से गकार को द्वित्व । न ५२ से इकार को दीर्घ । विकल्प से अकारादेश । दवग्गी, दावग्गी । ( खादितम् ) पूर्ववत् दकार तकार लोप, अनुस्वार । विकल्प से अकार । खइअ, खाइअ । ( सस्थापितम् ) ष्ठाध्यामाना ८।२५। से स्था को ठा आदेश । 'न बिन्दुपरे' से द्वित्व निषेध । न १८ से पकार को बकार । न २ से तलोप । न ३७ से अनुस्वार । विकल्प से अकार । सठविअ, सठा विअं । ( हालिक ) पूर्ववत् कलोप, ओकार, विकल्प से अकार । हलिओ, हालिओ । वाग्रहण व्यवस्थित विकल्पार्थक है । अत ब्राह्मणादिक में नित्य अकार होगा । (ब्राह्मण ) बम्हणो । ह्लह्मेषु० इससे हकार के पूर्व हकारोपरि मकार । न ५ से रेफलोप । न ४२ से 'सु' को ओकार । बम्हणो । ( स्थापित ) स्था धातु + (क्त) त प्रत्यय । 'आवि क्तभाव कर्मसु वा' इस से आवि आगम । ( ष्ठाध्यागाश्च० ८।२६ ) सूत्र से ठा आदेश । न ३५ से आवि के आकार का लोप । न १८ से पकार को वकार । ४२ से ओकार । व्यवस्थित विभाषा से नित्य ह्रस्व । ठविओ । एवम् । ( प्रासम् ) न ३ से पलोप । ६ से तकार को द्वित्व । ६२ से अनुस्वार । पूर्ववत् नित्य ह्रस्व अकार । अनुस्वार । पत्त । ( पाशु ) नित्य अकार । न ५२ से उकार को दीर्घ । २६ से शकार को सकार । पसू । ( आश्चर्यम् ) न ६४ से श्च को छकार । न ६ से छकार द्वित्व । ७ से छकार को चकार । ५७ से र्य को रिय । न २ से यलोप । न ६२ से अनुस्वार । नित्य ह्रस्वाकार । अच्छरिअ । एवम् ( पूर्वाह्ण ) का पुव्वण्णो । नित्य अकार । ५९ से ऊकार को उकार । अन्य कार्य पूर्वोक्त सूत्रों से । एवम् ( मध्याह्न ) मज्झण्णो । ( अपराह्ण ) अवरण्हो ।

नो —न ( २३ ) खघथधभा ह । ( २४ ) आदेर्यो ज (५) सर्वत्र लवराम् ( ४२ ) अत ओत् सो । ( ९ ) ऋतोऽत् । ( २ ) कगचजतदपयवा प्रायो लोप । ( ३७ ) मो विन्दु । ( २९ ) स्तस्य थ । ( ६ ) शेषादेशयो० । ( ७ ) वर्गेषु युज पूर्व । ( ३ ) उपरि लोप कगडतदपषसाम् ( १९ ) टो ड । ( ४ ) अधो मनयाम् । ( ५२ ) सुभिसुप्सु दीर्घ । ( १८ ) पो व ॥ १० ॥

## इत्सदादिषु ॥ ११ ॥

सदा इत्येवमादिष्वात इकारो भवति वा । सइ, सआ । (२–२ दूलोप , एवमग्रिमेष्वपि ) । तइ, तआ । जइ, जआ । सदा, तदा, यदा ॥ ११ ॥

इत् सदादिषु—सदा इत्येवमादिषु आकारस्य वा इत्स्यात् । ( सदा ) सइ, सआ । एवम्—( यदा ) जइ, जआ । ( तदा ) तइ, तआ ॥ ११ ॥

सदा इत्यादिक शब्दों के आकार को विकल्प से इकार हो । न २ से दकार लोप । ( सदा ) सइ, सआ ( यदा ) न २४ से आदिस्थ यकार को जकार । पूर्ववत् दकारलोप । जइ, जआ । ( तदा ) तइ, तआ ॥ ११ ॥

## इत एत् पिण्डसमेषु ॥ १२ ॥

पिण्ड इत्येवंसमेषु इकारस्यैकारादेशो भवति वा । पेण्डं, पिण्डं । (५–३० बि०) णेद्दा, णिद्दा । (२–४२ न् = ण् , ३–३ र्लोप , ३–५० दुद्वि०) सेंदूरं, सिन्दूरं । ( ४–१७ वर्गान्त बिं०, ५–३० बिं० ) धम्मेलं, धम्मिल्लं ।

दिया है। व्यवस्थित विकल्प होने से कहीं नहीं भी होगा। (विनश्यन्) २५ से न को ण। ४ से यलोप। २६ से सकार। ६ से द्वित्व। विणस्सतो ॥ २२ ॥

## पत्तने ॥ २३ ॥

**पत्तनशब्दे युक्तस्य टकारो भवति। पट्टण (३-५० टूद्वि०, २-४२ न् = ण्, ५-३० बि०) ॥ २३ ॥**

मृत्तिकापत्तनयोश्च[1]—एतयोर्युक्तस्य तस्य ट स्यात्। मट्टिआ। पट्टण ॥ २३ ॥

मृत्तिका और पत्तन शब्द के द्वित्व त्त को ट हो। (मृत्तिका) त्त को ट। द्वित्व। २ से कलोप। ९ से ऋ को अकार। मट्टिआ। (पत्तनम्) टकारादेश, द्वित्व। २५ से न को ण। पट्टण ॥ २३ ॥

## न धूर्तादिषु ॥ २४ ॥

**धूर्त इत्येवमादिषु र्त इत्येतस्य टकारो न भवति। धुत्तो (३-३ र्लोप, ३-५० त्द्वि०, ५-२९ ह्रस्व, ५-१ ओ)। कित्ति (३-३ र्लोप, ३-५० त्द्वि०, ५-२९ ह्रस्व)। वत्तमाणं (३-३ र्लोप, ३-५० त्द्वि०, २-४२ न् = ण्, ५-३० बिं०)। वत्ता (४-१ आ = अ, ३-३ र्लोप, शे० पू०)। आवत्तो (५-१ ओ, शे० पू०)। संवत्तओ (३-३ र्लोप, ३-५० त्द्वि०, २-२ क्लोप, शे० पू)। णिवत्तओ (२-४२ न् = ण्, शे० पू०)। वत्तिआ (३-३ र्लोप, ३-५० त्द्वि०, २-२ क्लोप)। अत्तो। कत्तरी। मुत्ती (पूर्ववद्रलोपो ह्रस्वादिकञ्च)। धूर्त, कीर्ति, वर्तमानम्, वार्ता, आवर्त, सवर्तक, निवर्तक, वर्तिका, आर्त, कर्तरी, मूर्ति ॥ २४ ॥**

न धूर्तादिषु—एषु र्तस्य टकारो न स्यात्। धुत्तो। मुत्तो। मुहुत्त। कत्तरी। आवत्तो। कित्ती। वत्ता। भत्तारो। कत्तारो ॥ २४ ॥

धूर्तादिक शब्दों में र्त को ट आदेश नहीं होगा। (धूर्त, मूर्त, मुहूर्त) सर्वत्र ५ से रेफलोप। ६ से तद्वित्व। ५९ से उकार। धुत्तो, मुत्तो, मुहुत्तो। (कर्त्तरी) कत्तरी। (आवर्त्त) आवत्तो। (कीर्ति) 'इदीत पानीयादिषु' से ई को इकार। कित्ती। (वार्ता) ५८ से अकार। वत्ता। (भर्तार, कर्तार) भत्तारो। कत्तारो। लोप, द्वित्व, पूर्ववत् ॥ २४ ॥

## गर्ते डः ॥ २५ ॥

**गर्तशब्दे र्तस्य डकारो भवति। गड्डो (३-५० ड्द्वि०, ५-१ ओ) ॥**

गर्ते ड—अत्र र्तस्य ड स्यात्। गड्डो ॥ २५ ॥

गर्त-शब्द में र्त को ड हो। ६ से द्विरव। गड्डो ॥ २५ ॥

## [2]गर्दभसंमर्दवितर्दिविच्छर्दिषु र्दस्य ॥ २६ ॥

---

१ एष सजीवनीसमत पाठः। २ क्वचिद् विमर्द इत्यधिक पाठस्तत्र विमड्डेति प्राकृत बोध्यम्।

एतेषु र्दस्य डो भवति । गड्डहो ( ३-५० ड्द्वि०, २-२७ भ् = ह्, ५-१ ओ ) । समड्डो (पूर्व०) । विअड्डी ( २-२ त्लोप, ३-३ र्लोप, ड्द्वि० पू०, ५-१८ दीर्घ ) । विछड्डी ( पूर्व० ) ॥ २६ ॥

गर्दभसमर्दवितर्दिविच्छर्दिषु र्दस्य—एषु र्दस्य वा डादेश स्यात्। गड्डहो, गद्दहो । समड्डो, समद्दो । विअड्डी, विअद्दी । विच्छड्डी, विच्छद्दी ॥ २९ ॥

गर्दभ इत्यादिक शब्दों मे र्द को विकल्प से ड हो। ( गर्दभ ) र्द को ड, द्वित्व। २३ से भ को ह । गड्डहो । पक्ष में—५ से सर्वत्र रेफलोप । द्वित्व । गद्दहो । ( समर्द ) समड्डो, समद्दो । विअड्डी, विअद्दी । विच्छड्डी, विच्छद्दी । डादेश, रेफलोप, द्वित्व, पूर्ववत् ॥ २६ ॥

## त्यथ्यद्यां चछजाः ॥ २७ ॥

त्य-थ्य-द्य इत्येतेषां च-छ-ज इत्येते यथासंख्य भवन्ति । त्यस्य, णिच्च[1] (२-४२ न् = ण्, ३-५० च्द्वि०, ५-३० बि०) । पच्चच्छ (३-३ र्लोप, ३-३० क्ष् = छ्, ५-३० बि० ) थ्यस्य, रच्छा । मिच्छा । पच्छं । (३-५० छ्द्वि०, ३-५१ छ् = च् ) । द्यस्य, विज्जा (३-५० ज्द्वि०) । बेज्जो (१-३४ ऐ = ए, पूर्व० ज्द्वि०, ५-१ ओ) । नित्यम्, प्रत्यक्षम्, रथ्या, मिथ्या, पथ्यम्, विद्या, वैद्य ॥ २७ ॥

त्यथ्यद्यां चछजा —एषां यथासख्यमेते आदेशा स्युः । ( त्यस्य ) पच्चक्ख । मच्चलोओ । सच्च । णिच्च । ( थ्य० ) पच्छो । णेपच्छो । रच्छा । मिच्छा । ( द्य० ) अज्ज । विज्जा । जूअ । मज्ज । पडिवज्जइ । 'यथाप्राप्तो यलोपोऽपि त्यथ्यद्येषु तु दृश्यते'। अत्तओ । सामत्थ । आतित्थ । गद्द । अवद्द ॥ २७ ॥

त्य, थ्य, द्य, इनको क्रम से च छ ज आदेश हों । उदाहरण—( प्रत्यक्ष ) त्य को च आदेश । ६ से द्वित्व । ३४ से क्ष को ख । ६ से द्वित्व । ७ से ककार । अनुस्वार, ओकार, सर्वत्र पूर्ववत् । रेफलोप ५ से । पच्चक्ख । ( मर्त्यलोक ) रेफलोप, चकारादेश, पूर्ववत् । २ से कलोप । मच्चलोओ । ( सत्यम् ) त्य को च, द्वित्व पूर्ववत् । सच्च । ( नित्यम् ) २५ से न को ण । णिच्च । ( थ्य ) ( पथ्य ) उक्त सूत्र से छ । ६ से द्वित्व । ७ से चकार । पच्छो । ( नेपथ्य ) पूर्ववत् छकार, द्वित्व, चकारादेश । २५ से णकार । णेपच्छो । एवम् ( रथ्या ) रच्छा । ( मिथ्या ) मिच्छा । ( द्य० ) ( अद्य ) द्य को जकार । ६ से द्वित्व । अज्ज । ( विद्या ) विज्जा । ( द्यूतम् ) द्य को ज । २ से तलोप । जूअ । ( मद्यम् ) मज्ज । ( प्रतिपद्यते ) ५ से रेफलोप, 'प्रतिवेतस०' से त को ड । १८ से प को व । द्य को ज, द्वित्व । आत्मनेपद के स्थान पर परस्मैपद । २ से तलोप । पडिवज्जइ । 'त्य थ्य, द्य' तीनों में प्रयोगानुकूल यकार का लोप भी होता है । ( अत्यय ) ४ से त्य के य का लोप । ६ से द्वित्व । २ से यलोप । ४२ से ओकार । अत्तओ । ( सामर्थ्यम् )

---

१ क्वचित् सच्च, पच्चख, पश्चच्च । सत्य, प्रत्यक्ष, पाश्चात्यमित्यधिकम् ।

पूर्ववत् यलोप। ४ से रेफलोप। द्वित्व ६ से, तकार ७ से। सामत्थ। ( आतिथ्यम् ) आतित्थ। ( गद्यम् ) गद्द। ( अवद्यम् ) अवद्द ॥ २७ ॥

## ध्यह्योर्झः ॥ २८ ॥

**ध्य-ह्य इत्येतयोर्झकारो भवति। ध्यस्य, मज्झं (३-५० झ्द्वि०, ३-५१ झ्=ज्, ५-३० बिं०)। अज्झाओ (५-१ ओ, शे० पू०)। ह्यस्य, वज्झओ (४-१ आ=अ, २-२ कूलोप, शे० पू०)। गुज्झओ (पूर्व०)। मध्य, अध्याय[1], वाह्यक, गुह्यक ॥ २८ ॥**

ध्यह्ययोर्झ[2]—एतयोर्झ स्यात्। सज्झा। वज्झा। गुज्झ। सणज्झइ। जुज्झइ। मुज्झइ। 'वक्तव्य साध्वसे ध्वस्य झादेशोऽपि विभाषया'। सज्झस। पक्षे—साहस ॥२८॥

ध्य-ह्य इनको झ हो। ( सध्या ) झादेश। ६ से द्वित्व अनुस्वार से पर को नहीं होता है। सझा। ( वन्ध्या ) बझा। ( गुह्यम् ) ६ से द्वित्व। ७ से जकार। गुज्झ। ( सनह्यते ) णकारादि भी पूर्ववत्। सणज्झइ। ( युध्यते ) २५ से य को जकार। जुज्झइ। ( मुह्यते ) मुज्झइ। 'साध्वस' शब्द में झादेश विकल्प से होगा। जहाँ झादेश हुआ वहाँ द्वित्व, जकार, पूर्ववत्। ५८ से अकार। सज्झस। पक्ष में ५ से वलोप। २३ से धकार को हकार। साहस ॥ २८ ॥

नोट—न (६) शेषादेशयोर्द्वित्वमनादौ। (५८) अदातो यथादिषु वा। (५) सर्वत्र लवराम्। ( २ ) कगचजतदपयवा प्रायो लोप। ( २५ ) नो ण सर्वत्र। ( ४ ) अधो मनयाम्। ( २६ ) शषो स। ( ९ ) ऋतोऽत्। ( ५९ ) उदूतो मधूकादिषु।

## ष्कस्कक्षा खः ॥ २९ ॥

**ष्कस्कक्षा खकारो भवति। ष्कस्य, सुक्ख (३-५० ख्द्वि०, ३-५१ ख्=क्, ५-३० बिं०)। पोक्खरो (१-२० सू० स्प०)। स्कस्य, खंदो। खंधो। (४-१७ वर्गान्त बिं०, ५-१ ओ)। क्षस्य, खदो। जक्खो (२-३१ सू० स्प०)॥ २९ ॥**

ष्कस्कक्षा ख—एषा ख स्यात्। 'ष्कस्कयोरत्र खादेशो व्यवस्थितविभाषया'। तेन सुक्ख, सुक्क। पोक्खर, पोक्कर। णिक्खओ, णिक्कओ। ( स्क० ) खधो। क्वचिन्नैव, दुक्कर। णिक्कवो। सक्कअ। सक्कारो। णमक्कारो। तक्करो। (क्षस्य) जक्खो, रक्खसो ॥२९॥

ष्क-स्क-क्ष इनको ख आदेश हो। स्क और ष्क को विकल्प से हो। ( शुष्कम् ) २६ से श को सकार। प्रकृत सूत्र से ष्क को ख। ६ से द्वित्व। ७ से ककार। सुक्ख। पक्ष में ३ से षलोप। शेष क को द्वित्व। सुक्क। ( पुष्करम् ) १ से उ को ओ। अन्य कार्य पूर्ववत्। पोक्खर। पोक्कर। ( निष्क्रय ) ५ से रेफलोप। ष्क को ख विकल्प से। २५ से न को ण। २ से यलोप। द्वित्व, ख को क पूर्ववत्। णिक्खओ। पक्ष में-३ से षलोप। ५ से रेफलोप। ६ से द्वित्व। णिक्कओ। ( स्कन्ध ) स्क को ख हो गया। खंधो। कहीं ष्क स्क को ख आदेश नहीं होगा। ( दुष्करम् )

---

१. शुष्क, पुष्कर, स्कन्द, स्कध, क्षत, यक्षा। सुक्खमिति पाठे सुष्क इति।

२ एव सजीवन्यादिसंमत पाठः।

३ से षलोप। ७ से द्वित्व। दुक्कर। ( निष्कृप ) १५ से न को ण। ९ से ऋ को अकार। १८ से प को व। अन्य कार्य पूर्ववत्। ( सस्कृतम् ) खादेश नही हुआ। 'मासादिषु वा' से अनुस्वारलोप। अन्य कार्य पूर्ववत्। सक्कअ। ( सस्कार ) सक्कारो। ( नमस्कार ) पूर्ववत्। न को ण, सलोप, कद्वित्व। णमक्कारो। परतु 'णमो अरिहताण'–इस आर्ष प्रसिद्ध मन्त्र में 'एसो पच णमुक्कारो सव्वपावप्पणासणो। मगलाण अ सव्वेसि पढम हवइ मगल' ॥ इस वचन में 'णमुक्कार' उकारयुक्त है, अत आर्षत्वात् अथवा ३२ से अ को उ हो जायगा। 'णमुक्कारो' यही होगा। ( तस्कर ) तक्करो। ( क्ष ) ( यक्ष ) २४ से य को ज आदेश। खादेश, द्वित्वादि पूर्ववत्। जक्खो। ( राक्षस ) ५८ से आ को अकार, अन्य कार्य पूर्ववत्। रक्खसो ॥ २९ ॥

## अक्ष्यादिषु च्छः ॥ ३० ॥

**अक्षि इत्येवमादिषु क्षकारस्य च्छकारो भवति। अच्छी (३–५० छद्वि०,[1] ३–५१ छ्=च्, ५–१८ दीर्घ) । लच्छी (३–२ म्लोप, शे० पू०)। छुण्णो (५–१ ओ)। छीर (स्पष्ट)। छुद्धो (३–३ व्लोप, ३–५० धद्वि०, ३–५१ ध्=द्, ५–१ ओ)। उच्छित्तो (३–१ तपयोर्लोप, ३–५० छद्वि०, ३–५१ चत्व, ३–५० त्द्वि०, ५–१ ओ)। सरिच्छं (१–२ सू० स्प०)। उच्छू (१–१५ सू० स्प०)। उच्छा (५–४७ आत्मवत् कार्य, शे० पू०)। रिच्छो (१–३ ऋ=रि, ३–५० छ्द्वि०, ३–५१ छ्=च्, ५–१ ओ)। मच्छिया (२–२ क्लोप, शे० पू०)। छुअं (२–२ त्लोप, ५–३० बिं०)। छुर (५–३० बिं०)। छेत्त (३–३ र्लोप, ३–५० त्द्वि०, ५–३० बि०)। वच्छो (३–५० छ्द्वि०, ३–५१ छ्=च्, ४–१८पु०, ४–६ स्लोप, ५ १ ओ)। दच्छो (पू०)। कुच्छी (५–१८ दीर्घ, शे० पू०)। अक्षि–लक्ष्मी–क्षुण्ण–क्षीर–क्षुब्ध–उत्क्षिप्त–सदृक्ष–इक्षु–उक्षन्–क्षार–ऋक्ष–मक्षिका–क्षुत क्षुर[2] क्षेत्र–वक्षस्[3]–दक्ष–कुक्षि–इत्येवमादय[4] ॥ ३० ॥**

अक्ष्यादिषु छ —एषु छ स्यात्। अच्छीइ। छीर। छुर। छार। मच्छिआ। रिच्छो। लच्छी। छुहा। दच्छो ॥ ३० ॥

अक्ष्यादिक शब्दों मे क्ष को छ आदेश हो। ( अक्षिणी का अक्षीणि ) क्ष को छकार, ६ से द्वित्व, ७ से च आदेश। अच्छीइ। विभक्ति-कार्य पञ्चम परिच्छेद में कहेंगे। ( क्षीरम् ) छ आदेश। आदिस्थ छकार है, अत द्वित्व नहीं होगा। छीर। ( क्षुरम् ) छुर। ( क्षारम् ) छार। ( मक्षिका ) यहाँ आदेशभूत छ आदिस्थ नहीं है, अत द्वित्व चकार हो जायगा। २ से कलोप। मच्छिआ। ( ऋक्ष ) १२ से ऋ को रि। छादेश। ६ से द्वित्व। ७ से चकार। रिच्छो। ( लक्ष्मी ) ४ से मलोप, अ य कार्य पूर्ववत्। लच्छी। ( क्षुधा ) ३३ से ध को ह। छुहा। ( दक्ष ) दच्छो।

---

१ चकाररहितश्छकार आदेशो बोध्य । तथव च छुण्णादिषु दृश्यते। २ क्षुरे विकल्प । छुरो, खुरो इति पठन्ति केचित्। ३ वृक्ष इति केचित्। ४ आर्षे इक्खू, खीर, सारिक्खमित्याद्यपि दृश्यते। हे०।

नोट—न (६) शेषादेशयोर्द्वित्वमनादौ (७) वर्गेषु युज पूर्वं। (३४) ष्कस्कक्षां ख। (५) सर्वत्र लवराम्। (२) कगचजतदपयवा प्रायो लोप। (२५) नो ण सर्वत्र। (१८) पो व (४) अधो मनयाम्। (४२) अत ओत् सो। (२४) आदेर्यो ज। (५८) अदातो यथादिषु वा। (२३) खघथधभा ह। (२६) शषो स।

## क्षमावृक्षक्षणेषु वा ॥ ३१ ॥

एतेषु क्षकारस्य छकारो भवति वा। छमा, खमा[1] (३–२९ क्ष् = ख्)। वच्छो, रुक्खो (१–३२ सू० स्प०)। छणं, खणं (पक्षे ३–२९ क्ष् = ख्, ५–३० विं०)। 'वृक्ष'शब्दे ऋकारस्याकारे कृते, क्षणशब्दे चोत्सवाभिधायिनि छत्वमिष्यते[2] ॥ ३१ ॥

क्षमावृक्षक्षणेषु वा—एषु वा छ स्यात्। पक्षे ख। छमा, खमा। वच्छो, रुक्खो। छणो, खणो। 'उत्सवार्थे क्षणे छत्व, मुहूर्ते तु खणो भवेत्'। सूत्रे क्ष्मेति केचित् ॥ ३१ ॥

क्षमा-वृक्ष-क्षण शब्दों में क्ष को छ विकल्प से हो। (क्ष्मा) 'अ क्ष्माश्लाघयो' इससे क्ष और मकार का विश्लेषण करके मध्य में अकारागम होगा। क्ष को छकार। छमा। पक्ष में ३४ से क्ष को ख आदेश। खमा। (वृक्ष) ९ से ऋ को अकार। छकार आदेश। ६ से छकारद्वित्व। ७ से चकार। ओत्व पूर्ववत्। वच्छो, पक्ष में 'वृक्षे वेन रुर्वा' १।३२। से वृ को रु आदेश। ३४ से क्ष को ख आदेश। द्वित्व, कादेश पूर्ववत्। रुक्खो। (क्षण) छादेश। छणो। पक्ष में—खणो। 'उत्सव अर्थ में छादेश छणो और मुहूर्त अर्थ में खणो। कोई 'क्षमा' के स्थान पर 'क्ष्मा' पढ़ते हैं। पूर्ववत् साधुत्व ॥ ३१ ॥

## ष्मपक्ष्मविस्मयेषु म्हः ॥ ३२ ॥

ष्म—इत्येतस्य पक्ष्मविस्मयशब्दयोश्च युक्तस्य म्हकारो भवति। ग्रीष्मस्य, गिम्हो (३–३ रेफलोप, ह्रस्व संयोगे—ई = इ, ५–१ ओ)। उह्मा (५–४७ आत्मवत् कार्य्यं, शे० पू०)। पह्मो (५–१ ओ, शे० पू०)। विम्हओ (२–२ यलोप, शे० पू०)। ग्रीष्म, उष्मन्, पक्ष्मन्, विस्मया ॥

ष्मपक्ष्मविस्मयेषु म्ह—एषु युक्तवर्णस्य म्हादेश स्यात्। गिम्हो। पम्हो। विम्हओ ॥ ३२ ॥

ष्म को और पक्ष्म-विस्मय शब्दों के युक्त वर्ण को 'म्ह' आदेश हो। (ग्रीष्म) ष्म को म्ह आदेश। ३६ से ईकार को इकार। ५ से रेफलोप। गिम्हो। (पक्ष्म) क्ष्म को म्ह आदेश। लिङ्गव्यत्यय। नपुसक-लिङ्ग का पुलिङ्ग। पम्हो। (विस्मय) स्म को म्ह आदेश। २ से यलोप। विम्हओ ॥ ३२ ॥

नोट—न (६) शेषादेशयोर्द्वित्वमनादौ। (७) वर्गेषु युज पूर्वं। (३) उपरि लोपः कगडतदपषसाम्। (१) उत ओत् तुण्डसमेषु। (५) सर्वत्र लवराम्।

---

१ क्षमा पृथिवी, खमा क्षान्ति। हे०। २ क० पु० छणो। क्षण उत्सव इत्यर्थं। अ० पा०। ३ सजीवनीसमत पाठोऽयम्।

( २५ ) नो ण सर्वत्र । ( २ ) कगचजतदपयवा प्रायो लोप । ( ९ ) ऋतोऽत् । ( १८ ) पो व । ( ३५ ) सन्धौ अज्लोपविशेषा बहुलम् । ( २४ ) आदेर्यो ज । (५८) अदातो यथादिषु वा । (२२) ऋ रीति । (४) अधो मनयाम् । (२३) खघथधभा ह ।

## ह्नस्नष्णक्ष्णश्नां ण्हः ॥ ३३ ॥

ह्नादीनां ण्ह इत्ययमादेशो भवति । ह्नस्य, वण्ही, जण्हू (५-१८ दीर्घ) । स्नस्य, ण्हाणं (५-३० बि०, २-४२ न् = ण्) । पण्हुदं (३-३ र्लोप, १२-३[1] त् = द्, ५-३० बिं०) । ष्णस्य, विण्हू (५-१८ दीर्घ) । कण्हो (३-६१ विप्रकर्षात् ऋ = अ, ५-१ ओ) । क्ष्णस्य, सण्हं (२-४३ श् = स्, विप्रकर्षात् बाहुलकेन लस्यात्वे, ५-३० बिन्दु) । तिण्ह (ह्रस्व सयोगे ती = ति, शे० पू०) । श्नस्य, पण्हो (३-३ र्लोप, ५-१ ओ) । सिण्हो २-४३ श् = स्, शे० पू०) । वह्नि, जह्नु, स्नानम्, प्रस्नुतम्, विष्णु, कृष्ण, श्लक्ष्णं, तीक्ष्णम्, प्रश्न, शिश्न ॥ ३३ ॥

ह्नस्नष्णक्ष्णश्ना ण्ह —एषा ण्ह स्यात् । जण्हू । जाण्हवी । ण्हाण । जोण्हा । विण्हू । जिण्हू । तिण्ह । 'तीव्रार्थे तीक्ष्णशब्दे ण्हो, निशितार्थे तु खो भवेत्' । निशितार्थे तु-तिक्ख । श्लक्ष्णम् । 'उपरि क्वापि वक्तव्यो लोपो वर्णान्तरस्य वा' । इति शलोप । लण्ह । ( श्नस्य ) पण्हा । अण्हन्तो ॥ ३३ ॥

ह्न स्न ष्ण क्ष्ण श्न इनको ण्ह आदेश हो । ( जह्नु ) ह्न को ण्ह आदेश । कोई 'अधो मनयाम्' से नकारलोप के अनन्तर ण्ह मानते है । परन्तु नित्यत्वात् प्रथम ही ण्ह हो जायगा । ५२ से दीर्घ । ( जाह्नवी ) जाण्हवी । ( स्नानम् ) ण्हाण । २५ से न को ण । ( ज्योत्स्ना ) २ से तलोप । ४ से यलोप । ण्हादेश । जोण्हा । ( विष्णु ) ५२ से ऊकार । विण्हू । ( जिष्णु ) जिण्हू । ( तीक्ष्णम् ) ३६ से ह्रस्व इकार । क्ष्ण को ण्ह आदेश । तिण्ह । तीव्र अर्थ में तिण्ह । निशित तीखे अर्थ में तिक्ख । ४ से नलोप । ३४ से ख आदेश । ६ से द्वित्व, ७ से ककार । ( श्लक्ष्णम् ) 'उपरि क्वापि' से शलोप । लण्ह । ( प्रश्न ) ५ से रेफलोप । पुलिङ्ग का प्राकृतत्वात् स्त्रीलिङ्ग । पण्हा । ( अश्नन् ) अण्हतो ॥ ३३ ॥

## चिह्ने न्धः ॥ ३४ ॥

चिन्ह्शब्दे युक्तस्य न्ध इत्ययमादेशो भवति । चिन्धं । ( १-१२ सू० स्प० ) ॥ ३४ ॥

चिह्ने न्ध —अत्र न्ध स्यात् । चिन्ध ॥ ३४ ॥

चिह्न शब्द में ह्न को न्ध आदेश हो । ( चिह्नम् ) न्धादेश । चिन्धम् ॥ ३४ ॥

## ष्पस्य फः ॥ ३५ ॥

ष्प इत्येतस्य फ इत्ययमादेशो भवति । पुप्फं (३-५० फ्द्वि०, ३-५१ फ् = प्, ५-३० बिं०) । सप्फं (२-४३ श्=स, शे० पू०) । णिप्फा

---

[1] व्यत्ययात्प्राकृतेऽपि, एव खदो इत्यत्रापि बोध्यम् ॥

ओ। ( २-३२ न् = ण् , २-२ प्लोप , फ्द्वित्व पत्व च पू०, ५-१ ओ )। पुष्पम् , शष्पम् , निष्पाप ॥ ३५ ॥

ष्पस्य फ —ष्प इत्येतस्य फ स्यात्। पुप्फ। सप्फ। णिप्फाओ। णिप्फण्ण। 'श्लेष्मशब्दे तु फादेश ष्म इत्यस्य प्रचक्षते'। सेप्फो। सलेसमा इति लोके॥ ३८॥

ष्प को फ आदेश हो। ( पुष्पम् ) फ आदेश। ६ से द्वित्व। ७ से पकार। पुप्फ। ( शष्पम् ) २६ से श को सकार। अन्यकार्य पूर्ववत्। सप्फ। ( निष्पाप ) २५ से न को ण। २ से पलोप। फादेशादि पूर्ववत्। णिप्फाओ। अथवा 'प्रायो लोप' णिप्फावो। ( निष्पन्नम् ) णिप्फण्ण। श्लेष्म-शब्द में भी ष्म को फ आदेश होता है। ५ से लकार का लोप। २६ से श को स। फ आदेशादि पूर्ववत्। सेप्फो। 'सलेस्मा' लोकमें होता है। शकार लकार का वर्ण विश्लेषण करके मध्य में अकारागम। २६ से श ष को सकार। सलेस्मा॥ ३५॥

## स्पस्य सर्वत्र स्थितस्य ॥ ३६ ॥

**स्प इत्येतस्य सर्वत्र स्थितस्य फ इत्ययमादेशो भवति। फंसो ( ४-१५ बिन्दु., ३-३ र्लोप , २-४३ श्=स् , ५-१ ओ )। फंदणं (२-४२ न् = ण् , ५-३० बिं०, शे० पू० ) स्पर्श , स्पन्दनम् ॥ ३६ ॥**

स्पस्य—स्पस्य फ स्यात्।फसो।'बिन्द्वादीवृत्परस्येह द्वित्व शेषस्य नेष्यते। क्वचित्सस्य क्वचित्पस्य लोप स्पाक्षर इष्यते'॥ परोप्पर। वणस्सई। क्वचित् छादेशोऽपि-छिहा॥

स्प को फ आदेश हो। ( स्पर्श ) स्प को फ आदेश। ५ से रेफलोप। २६ से श को स। ६१ से अनुस्वारागम। ( बिन्दु० ) अनुस्वार-आकार-ईकार-ऊकार से पर लोपादि से अवशिष्ट वर्ण को द्वित्व नहीं होता है। अत सकार को द्वित्व नहीं हुआ। फसो। 'स्प' अक्षर के कहीं सकार का और कहीं पकार का लोप हो। ( परस्परम् ) सलोप। ६ से द्वित्व। ३५ से बहुलग्रहण से अकार को ओकार। परोप्पर। ( वनस्पति ) पलोप, सद्वित्व। ५२ से इकार को दीर्घ। २ से तकारलोप। २५ से न को ण। वणस्सई। कहीं स्प को छकारादेश भी होता है। ( स्पृहा ) १० से ऋकार को इकार। छिहा॥ ३६॥

नोट—न (३४) ष्कस्कयो ख। ( ९ ) ऋतोऽत्। ( ६ ) शेषादेशयोर्द्वित्वमनादौ। ( ७ ) वर्गेषु युज पूर्व। ( ३६ ) इदीत पानीयादिषु। ( ५ ) सर्वत्र लवराम्। ( २ ) कगचजतदपयवा प्रायो लोप। ( ४ ) अधो मनयाम्। (५२) सुभिसुप्सु दीर्घ। ( २६ ) शषो स। ( २५ ) नो ण सर्वत्र।

## सि च[2] ॥ ३७ ॥

**स्पस्य क्वचित् सि इत्ययमादेशो भवति। पाडिसिद्धी। ( १-२ सू० स्प० )। प्रतिस्पर्द्धी ॥ ३७ ॥**

## वाष्पेऽश्रुणि हः ॥ ३८ ॥

**बाष्पशब्दे ष्प इत्येतस्य हकारो भवति अश्रुणि वाच्ये। बाहो**

१ सजीवनीसंमत० पाठ। २, सि च—इति सूत्र नास्ति सजीवन्यादौ।

**( ५-१ ओ, ३-५४ ह्रद्वित्वं न )। अश्रुणि किम्? बप्फो ( ४-१ वा = ब, ३-३५ ष्प् = फ्, ३-५० फ्द्वि०, ३-५१ फ् = प्, ५-१ ओ )। उह्म[1] ( ५-४७ आत्मवत् )। बाष्प, ऊष्मा ॥ ३८ ॥**

बाष्पेऽश्रुणि ह —अश्रुण्यर्थे वाष्पशब्दस्य ष्पस्य ह स्यात्। बाहो। मण्डूकप्लुत्या वेति सबध्यते। तेन—'वप्फमोक्ख करइस्स' इत्यादौ न। 'क्वचिद् दक्षिणशब्देऽपि क्षस्य हादेश इष्यते'। दाहिणो। क्वचिद्ग्रहणात् न सर्वत्र। दक्खिणो। दक्खिण्ण-इत्यादौ न ॥ ३८ ॥

अश्रु अर्थ में वाष्पशब्द के ष्प को ह आदेश। ( वाष्प ) ह आदेश हो गया। बाहो। 'मण्डूकप्लुति' से 'क्षमावृक्षक्षणेषु वा' से वा की अनुवृत्ति लाने से यह अर्थ होगा कि कहीं ह आदेश नहीं होगा। जैसे-'बफ्फमोक्ख करइस्स', 'ष्पस्य फ' से फ आदेश। द्वित्व, पकार पूर्ववत्। 'बप्फ' इति। कही 'दक्षिण'शब्द में भी क्ष को ह आदेश होता है। ( दक्षिण ) क्ष को हकार। दाहिणो। क्वचित् ग्रहण है, अर्थात् कहीं किसी स्थलविशेष में होगा, सर्वत्र नहीं। अत ( दक्षिण ) में ह आदेश नहीं होगा। किन्तु ३४ से क्ष को ख आदेश। ६ से द्वित्व। ७ से ककार। दक्खिणो। ( दाक्षिण्यम् ) पूर्ववत् क्ष को ख आदेश, द्वित्व, ककार। ४ से यलोप। शेष णकार को ६ से द्वित्व। ५८ से आकार को ह्रस्व अकार। दक्खिण्ण ॥ ३८ ॥

## कार्षापणे ॥ ३९ ॥

**कार्षापणशब्दे युक्तस्य हकारो भवति। काहावणो ( २-१५ प् = व्, २-४२ न् = ण्, ५-१ ओ ) ॥ ३९ ॥**

कार्षापणे—अत्र युक्तस्य ह स्यात्। काहावणो ॥ ३९ ॥

कार्षापणशब्द में युक्त 'र्ष' को ह होय। ( कार्षापण ) र्ष को ह आदेश। १८ से प को वकार। काहावणो ॥ ३९ ॥

## श्चत्सप्सां छः ॥ ४० ॥

**एतेषां छकारो भवति। श्चस्य, पच्छिम ( ३-५० छ्द्वि०, ३-५१ छ = च्, ४-१२ विं० )। अच्छेर ( १-५ सू० स्प० )। त्सस्य, वच्छो ( ५-१ ओ )। वच्छरो ( ३-५० छ्द्वि०, ३-५१ छ् = च्, ५-१ ओ )। प्सस्य, लिच्छा। जुगुच्छा ( स्पष्टम् )। पश्चिमम्, आश्चर्यम्, वत्स, वत्सर, लिप्सा, जुगुप्सा ॥ ४० ॥**

श्चत्सप्सा छ —एषा छ स्यात्। ( श्चस्य ) णिच्छओ। पच्छिमो। ( त्सस्य ) वच्छो। उच्छाहो। ( प्सस्य ) लिच्छा। जुउच्छा। 'छादेश श्चत्सयो क्वापि न मन्यन्ते मनीषिण'। णिच्चलो। इह तु वा-ऊसित्तो। 'ईदूताविदुतो स्थाने स्याता लक्ष्यानुरोधत'। पक्षे-उच्छित्तो ॥ ४० ॥

श्च+त्स+प्स इनको छकार हो। ( निश्चय ) श्च को छ आदेश। ६ से द्वित्व।

---

१ कचिदय पाठो न दृश्यते।

७ से चकार। २१ से न को ण आदेश। २ से यलोप। ४२ से ओकार। णिच्छओ। ( पश्चिम ) पूर्ववत्। पच्छिमो। 'त्स' का उदाहरण—( वत्स ) वच्छो। ( उत्साह ) उच्छाहो। ( प्स का )—( लिप्सा ) लिच्छा। ( जुगुप्सा ) २ से गलोप। जुउच्छा। लोप प्रायिक है, अत जुगुच्छा। 'श्च त्स' को सर्वत्र छकार नहीं होता है। अत निश्चल, उत्सिक्त—इत्यादिक में छादेश नहीं होगा। ( निश्चल ) २५ से न को णकार। 'उपरि क्वापि वक्तव्यो लोपो वर्णान्तरस्य च'। इससे अथवा पूर्वस्थानिक सकार मानकर ३ से सलोप। ६ से द्वित्व। णिच्चलो। ( उत्सिक्त ) यहाँ विकल्प से छकार का निषेध होगा। ३ से तकार और क्त के ककार का लोप होगा। लघ्यानुरोध से उकार को ऊकार होगा। बिन्दु, दीर्घ–आ, ई, ऊ से पर वर्ण को द्वित्व नहीं होता है, अत ऊकार से पर सकार को द्वित्व नहीं हुआ। तकार को द्वित्व। ऊसित्तो। पक्ष में-छकार। ६ से द्वित्व। ७ से चकार। उच्छित्तो ॥ ४० ॥

नो॰—न ( २६ ) शषो स। ( ५ ) सर्वत्र लवराम्। ( ६१ ) वक्रादिषु। ( ६ ) शेषादेशयोर्द्वित्वमनादौ। ( ३५ ) सन्धौ अज्लोपविशेषा बहुलम्। ( ५२ ) सुभिसुप्सु दीर्घ। ( २ ) कगचजतदपयवा प्रायो लोप। ( २५ ) नो ण सर्वत्र। ( १० ) इदृष्यादिषु। ( ३४ ) ष्कस्कक्षां ख। ( ७ ) वर्गेषु युज पूर्व। ( ४ ) अधो मनयाम्। ( ५८ ) अदातो यथादिषु वा। ( १८ ) पो व। ( ४२ ) अत ओत्सो।

## वृश्चिके ञ्छः ॥ ४१ ॥

**वृश्चिकशब्दे श्चकारस्य ञ्छ इत्ययमादेशो भवति। विञ्छुओ ( शेषं १–१५ सू॰ स्प॰ ) ॥ ४१ ॥**

वृश्चिके ञ्छ —अस्य ञ्छ स्यात्। विञ्छुओ ॥ ४१ ॥

**वृश्चिकशब्द में श्च को ञ्छ आदेश हो। ( वृश्चिक ) १० से ऋ को इकार। 'उदिक्षुवृश्चिकयो' से श्च–गत इकार को उकार। विञ्छुओ ॥ ४१ ॥**

## नोत्सुकोत्सवयोः ॥ ४२ ॥

**उत्सुक, उत्सव–इत्येतयो छकारो न भवति। 'श्चत्सप्सां छ' इति प्राप्ते प्रतिषिध्यते। उस्सुओ ( २–२ क्लोप, ५–१ ओ )। उस्सवो ( ३–१ त्लोप, ३–५० स्द्वि॰, २–२ प्रायोग्रहणात् लोपो न, शे॰ पू॰ ) ॥ ४२ ॥**

नोत्सुकोत्सवयो —एतयो त्सस्य छादेशो न स्यात्। ऊसुओ। ऊसओ ॥४२॥

उत्सुक और उत्सव शब्द में 'त्स' को छकार नहीं होगा। ( उत्सुक ) ३ से तकारलोप। लघ्यानुरोध से उकार को ऊकार। तथा दीर्घ से पर को द्वित्व नहीं होगा। २ से ककार का, उत्सव में वकार का लोप होगा। ऊसुओ। ( उत्सव ) ऊसओ ॥ ४२ ॥

## न्मो मः ॥ ४३ ॥

**न्म इत्येतस्य म इत्ययमादेशो भवति। अधो लोपे प्राप्ते। जम्मो ( ३–५० म्द्वि॰, ५–१ ओ )। वम्महो ( २–३९ सू॰ स्प॰ )। जन्म, मन्मथ ॥ ४३ ॥**

न्मो म —न्म इत्यस्य म स्यात्। उम्माओ। सम्मग्गो। जम्मो॥ ४३॥

न्म इसको म आदेश हो। (उन्माद) न्म को मकार हो गया। ६ से मकारद्वित्व। २ से दकारलोप। ४२ से ओकार। उम्माओ। (सन्मार्ग) म आदेश, द्वित्व। ५ से रेफलोप। द्वित्व। ५८ से आ को अकार। ओत्वादि पूर्ववत्। सम्मग्गो। (जन्म) न्म को मकार। द्वित्व। 'नसन्तप्रावृट्०' ४+१८ से पुल्लिङ्ग। ओकार पूर्ववत्। जम्मो॥ ४३॥

नोट—न (२५) नो ण सर्वत्र। (३) उपरि लोप कगडतदपषसाम्। (६) शेषादेशयोर्द्वित्वमनादौ। (७) वर्गेषु युज पूर्वं। (१०) इदृष्यादिषु। (४२) अत ओत्सो। (५) सर्वत्र लवराम्। (५८) अदातो यथादिषु वा। (३२) त्यथ्यद्या चछजा।

## म्नज्ञपञ्चाशत्पञ्चदशेषु णः॥ ४४॥

म्न ज्ञ इत्येतयो पञ्चाशत्-पञ्चदशशब्दयोश्च युक्तस्य णकारो भवति। म्नस्य, पज्जुण्णो (३-३ र्लोप, ३-२७ द्य्=ज्, ३-५० जणयो र्द्वि०, ५-१ ओ)। ज्ञस्य[1] जण्णो (२-३१ य्=ज्, शे० पू०)। विण्णाणं (३-५० णद्वि०, २-४२ न्=ण्, ५-३० बि०)। पण्णासा (२-४३ श्=स, ४-७ त्=आ, शे० पू०)। पण्णरहो (३-५० ण्द्वि०, २-१४ द्=र्, २-४४ श्=ह्, ५-१ ओ)। प्रद्युम्न, यज्ञ, विज्ञानम्, पञ्चाशत्, पञ्चदश॥ ४४॥

म्नज्ञपञ्चाशत्पञ्चदशासु[2] ण —म्नज्ञयो पञ्चाशत्-पञ्चदश इत्येतयोर्यो युक्तो वर्णस्तस्य ण स्यात्। पज्जुण्णो। णिण्णआ। अहिण्णाण। विण्णाण। पण्णासा। पण्णरह॥४४॥

म्न, ज्ञ-इन अक्षरों को और पञ्चाशत्-पञ्चदश शब्दों के युक्त वर्ण को णकार हो। (प्रद्युम्न) ५ से रलोप। ३२ से द्य को जकार। म्न को णकार। द्वित्व, ओकार पूर्ववत्। पज्जुण्णो। (निम्नगा) म्न को ण। द्वित्व। २५ से न को ण। २ से गलोप। णिण्णआ। 'णिण्णगा' व्यवहार्य है। (अभिज्ञानम्) ज्ञ को णकार। द्वित्व। २३ से भ को हकार। २५ से न को णकार। अहिण्णाण। एवम् (विज्ञानम्) विण्णाण। (पञ्चाशत्) ञ्च को णकार। द्वित्व। २६ से श को स। 'स्त्रियामात्' से आकार। पण्णासा। (पञ्चदश) 'ञ्च' को णकार, द्वित्व। २७ से ह। १७ से रेफ। पण्णरह॥४४॥

## तालवृन्ते ण्टः॥ ४५॥

तालवृन्ते युक्तस्य ण्ट इत्ययमादेशो भवति। तालवेण्टअं (१-१० सू० स्प०)॥ ४५॥

तालवृन्ते ण्ट —अत्र युक्तस्य ण्टादेश स्यात्। तालवेण्ट। वृन्तशब्दस्य प्राधान्येनाभिप्रेतत्वात्तालपदोपपद विनापि ण्टादेश। (वृन्तम्) वेण्ट॥ ४५॥

तालवृन्तशब्द में न्त को ण्ट हो। इससे न्त को ण्ट आदेश। ९ से ऋ को अकार। ३१ से एकार। तालवेण्ट। प्रधान वृन्तशब्द ही विवक्षित है। ताल-

---

१ शो ज ८।२।८३। ज्ञ सम्बन्धिनो ञस्य लुग भवति। सज्ञा, सण्णा। क्वचिन्न भवति, विण्णाण। हे०। २ सजीवनीस्थ पाठ।

शब्द के बिना केवल वृन्त-शब्द में भी 'ण्ट' आदेश होगा। अन्य कार्य पूर्ववत्। ( वृन्तम् ) वेण्ट ॥ ४५ ॥

## भिन्दिपाले ण्डः ॥ ४६ ॥

भिन्दिपालशब्दे युक्तस्य ण्ड इत्ययमादेशो भवति । भिण्डिवालो ( २-१५ प = व् , ५-१ ओ ) ॥ ४६ ॥

भिन्दिपाले ण्ड —अत्र युक्तस्य ण्डादेश । भिण्डिआलो ॥ ४६ ॥

भिन्दिपालशब्द में न्द् को ण्ड हो । ( भिन्दिपाल ) भिण्डिआलो ॥ ४६ ॥

## विह्वले भहौ वा[1] ॥ ४७ ॥

विह्वलशब्दे युक्तस्य भकारहकारौ भवतो वा। विब्भलो[2] ( ३-५० भ्द्वि०, ३-५१ भ् = ब् , ५-१ ओ )। विहलो ( ३-५४ ह्द्वित्वं न )। विह्वल. ॥ ४७ ॥

विह्वले भो वा[2]—अत्र युक्तस्य भो वा स्यात्। भिब्भलो। पक्षे—विहलो। 'ह्वस्य भ क्वचिदन्यत्र गोजिह्वादावपीष्यते'। गोइब्भा ॥ ४७ ॥

## ( आदेश्च )

आदेश्च[4]—विह्वलशब्दे आदेर्वर्णस्य वा भकार स्यात्। अत्र चकारग्रहणाद् यत्र सयुक्तस्य भकारस्तत्रैवादेरपि। भिब्भलो, विहलो ॥

विह्वलशब्द में ह्व को भकार हो। इससे ह्व को भकार हो गया। ६ से भकार-द्वित्व। ७ से पूर्व भ को बकार। अग्रिम 'आदेश्च' से वकार को भकार हो गया। आदि में भकार है, अत उसे द्वित्व नहीं होगा। ओकार पूर्ववत्। भिब्भलो। पक्ष में-५ से वलोप। 'न रहो' से हकार के द्वित्व का निषेध हो जायगा। विहलो। 'विह्वल' शब्द के अतिरिक्त अन्यत्र भी ह्व को म आदेश होता है। ( गोजिह्वा ) ह्व को भ आदेश। द्वित्व, बकार पूर्ववत्। २ से जकार लोप। गोइब्भा। पक्ष में-जहाँ ह्व को भ नहीं होगा वहाँ 'आदेश्च' से वकार को भकार क्यों नहीं होता है? समाधान यह है कि—जहाँ ह्व को भ होता है वहीं आदि को भी भ होगा—यह चकारग्रहण से सूचित होता है। ( विह्वल ) भिब्भलो। विहलो ॥ ४७ ॥

नोट—न ( २५ ) नो ण सर्वत्र। ( २ ) कगचजतदपयवां प्रायो लोप। ( २३ ) खघथधभां हः। ( २६ ) शषो स। ( २७ ) दशादिषु ह। ( १७ ) सख्यायां च। ( ९ ) ऋतोऽत्। ( ३१ ) ए शय्यादिषु। ( ६ ) शेषादेशयोर्द्वित्वमनादौ। ( ७ ) वर्गेषु युज पूर्व। ( ५ ) सर्वत्र लवराम्।

## आत्मनि पः ॥ ४८ ॥

---

१ वा विह्वले वौ वश्च ८।२।५८। विह्वले ह्वस्य भो वा भवति तत्सन्नियोगे च विशब्दे वस्य वा भो भवति। भिब्भलो। है०। २ क्वचिद् वेब्भलो, तत्र पिण्डसमत्वादेत्व बोध्यम्। ३ सजीवनीसम्मत पाठ। ४ इद सूत्र नास्ति मामहवृत्तौ।

**आत्मशब्दे युक्तस्य पकारो भवति। अप्पा ( ३-५० पूद्वि, ५-४६ राजवत्कार्यम्-आ = अ ) ॥ ४८ ॥**

आत्मनि प —अत्र युक्तस्य वा प स्यात्। अप्पा। अत्ता। अप्पाणो। 'अविकल्पेन पादेशो माहात्म्ये प्रतिपाद्यते'। माहप्प ॥ ४८ ॥

आत्मन्-शब्द में सयुक्त त्म को विकल्प से पकार हो। ( आत्मा ) त्म को प आदेश हो गया। ६ से द्वित्व। अप्पा। पक्ष मे-४ से मलोप। तकारद्वित्व। ५८ से आकार को ह्रस्व। अत्ता। पक्ष मे-'आत्मनोऽप्पाणो वा' इससे अप्पाण आदेश। अप्पाणो। माहात्म्यशब्द में नित्य 'त्म्य' को 'प' आदेश हो। ( माहात्म्यम् ) ४ से यलोप। त्मको पकार। ६ से द्वित्व। माहप्प ॥ ४८ ॥

## क्मस्य ॥ ४९ ॥

**क्म इत्येतस्य पकारो भवति। रुप्पं ( ३-५० पद्वि०, ५-३० बि० )। रुप्पिणी ( पू० )। रुक्म, रुक्मिणी। योगविभागो नित्यार्थ ॥ ४९ ॥**

क्मस्य—क्म इत्यस्य पादेश स्यात्। रुप्प। रुप्पिणी। 'भवति स्थानिनो ड्मस्य कुड्मलेऽपि पकारता'। कुपल। 'त्वस्य स्थाने कचौ क्वापि ग्धद्धब्धेषु च ढ क्वचित्'। मउक्क। चच्चर। विअड्ढो। परिअड्ढी। बुड्ढो। थड्ढो। क्वचिदित्युक्तेर्नेह-गत्तरो। सदिद्धो। णिसिद्धो। लद्धो ॥ ४९ ॥

क्म को प आदेश हो। ( रुक्मम् ) प आदेश, पूर्ववत् द्वित्व। रूप्प। ( रुक्मिणी ) रुप्पिणी। 'कुड्मल' शब्द में भी ड्म के स्थान पर पकार आदेश हो। ( कुड्मलम् ) ड्म को पकार आदेश। ६१ से अनुस्वारागम। कुपल। अनुस्वार से पर को द्वित्व नही होता है, यह प्रथम बता आये हैं। त्व के स्थान पर कही ककार अथवा चकार होता है, और ग्ध द्ध ब्ध को ढकार होता है। जैसे-( मृदुत्वम् ) त्व को ककार। ६ से कद्वित्व। ९ से ऋ को अकार। २ से दलोप। मउक्क। ( चत्वरम् ) त्व को च आदेश। द्वित्व। चच्चर। ( विदग्ध ) ग्ध को ढकार। ६ से द्वित्व। ७ से ड। २ से दलोप। विअड्ढो। ( परिवृद्धि ) द्ध को ढ। ९ से ऋ को अकार। २ से वलोप। ५२ से इकारदीर्घ। ढ को द्वित्व। डादेश पूर्ववत्। परिअड्ढी। ( वृद्ध ) द्ध को ढ आदेश। द्वित्व, ड आदेश ६+७ से। ११ से ऋ को उकार। बुड्ढो। ( स्तब्ध ) ब्ध को ढ आदेश। पूर्ववत् द्वित्व, ड आदेश। २९ से स्त को थ आदेश। थड्ढो। 'क्वचित्' कहीं ये आदेश होते हैं, सर्वत्र नहीं। अत गत्तरो ( गत्वर )। ( सदिग्ध ) सदिद्धो। ( निषिद्ध ) णिसिद्धो। ( लब्ध ) लद्धो। ३ से व गलोप। ६+७ द्वित्व, दकार। २५ से न को ण। २६ से ष को स। णिसिद्धो। २ से नलोप। लद्धो ॥ ४९ ॥

नोट—न ( ६ ) शेषदेशयोर्द्वित्वमनादौ। ( ४ ) अधो मनयाम्। ( ५८ ) अदातो यथादिषु वा। ( ६१ ) वक्रादिषु। ( ९ ) ऋतोऽत्। ( २ ) कगचजतदपयवा प्रायो लोप। ( ५२ ) सुभिसुप्सु दीर्घ। ( ७ ) वर्गेषु युज पूर्व। ( ११ ) उद्दत्वादिषु। ( २९ ) स्तस्य थ। ( ३ ) उपरि लोप कगडतदपषसाम्। ( २५ ) नो ण सर्वत्र। ( २६ ) शषो स।

## शेषादेशयोर्द्वित्वमनादौ ॥ ५० ॥

युक्तस्य यौ शेषादेशभूतौ तयोरनादौ वर्तमानयोर्द्वित्वं भवति। शेषस्य तावत्, भुत्तं ( ३-१ क्लोप, ३-५० त्द्वि०, ५-३० बिं० )। मग्गो ( ३-३ र्लोप, ३-५० ग्द्वि०, ५-१ ओ )। आदेशस्य, लट्ठी ( २-३२ सू० स्प० )। दिट्ठी ( १-१८ सू० स्प० )। हत्थो ( ३-१२ सू० स्प० )। अनादाविति किम्? खलिअ ( ३-१ स्लोप, २-२ त्लोप, ५-३० बिं० )। खभो ( ३-१४ सू० स्प० )। थवओ (३-१२ सू० स्प०)। भुक्तम्, मार्ग, यष्टि, हस्त, स्खलितम्, स्तम्भ, स्तबक.॥ ५० ॥

शेषादेशयोर्द्वित्वमनादौ—सयुक्तस्य अध उपरि वा स्थिते व्यञ्जने लुप्ते यदवशिष्ट व्यञ्जन तच्छेष। यच्च युक्तस्यैव स्थाने आदिष्ट तदादेश। तयो अनादौ वर्तमानयोर्युक्त। रस्त्र शेषादेशयोर्द्वित्वम्। पूर्वश्चोदाहरणानि प्रपञ्चितानि, तत एवागन्तव्यम्। अथापि किञ्चिदुदाह्रियन्ते, शेषस्य तावत्-भुक्ति-भुत्ती। रश्मय-रस्सओ। आसक्त-आसत्तो। तस्कर तक्करो। लग्नम् लग्ग। भोज्यम् भोज्ज। उल्का उक्का। विप्लव-विप्पओ। निर्विण्ण-णिव्विण्णो। आदेशस्य-मर्यादा-मज्जादा। पर्याप्तम्-पज्जाण। कर्तनम् कट्ठण। गर्त-गड्डा। चेष्टा चेट्ठा। प्रत्यय पच्चओ। आतोद्यम्-आओज्ज। अनादावित्युक्तेनह—स्थविर थविरो। च्यवन-चवणो। ध्वज धओ। आदेशस्यादिस्थत्वान्नेह—स्तबक-थवओ। स्पन्द फदो। ध्यानम्-झाण। क्षीण-खीणो। स्थविरा-थविरा। ध्वज धओ। युक्तस्येत्यधिकाराद् युक्तयोरेव शेषादेशयोर्द्वित्वम्। तेनेह न—तट-तडो। तडाग तलाओ। विशेष-विसेसो। 'बिन्द्वादीदूत्परस्येह द्वित्व कस्यापि नेष्यते'। बिन्दो सख्या सखा। सन्ध्या-सझा। वक्र वको। प्रस्विन्नम्-पासिण्ण। निष्पन्द णीसन्दो। 'ईदूताविदुतो स्थाने स्याता लक्ष्यानुरोधत'। इतीकार। उत्सिक्त-ऊसित्तो। एवमेव लक्ष्यानुसारेण इदुतोरीदूतौ कल्पनीयौ॥ ५०॥

इस सूत्र में सयुक्ताक्षर के अध स्थित अथवा उपरि स्थित वर्ण का लोप करने पर जो अवशिष्ट रहे वह शेष तथा सयुक्त व्यञ्जन के स्थान पर जो हो वह आदेश कहलाता है। क्योंकि यह द्वित्वविधायक सूत्र 'युक्तस्य' ३+९ के अधिकार में पठित है। तो यह अर्थ होगा—आदि में विद्यमान नहीं ऐसे युक्त अक्षर का जो शेष अथवा आदेश-स्वरूप व्यञ्जन हो उसे द्वित्व हो। पूर्व में अनेक उदाहरण आ गये हैं। फिर भी उदाहरण तत्तत् सूत्रों के शेष तथा आदेश के दिये हैं। किस किस सूत्र के शेष तथा किस किस सूत्र के आदेश के उदाहरण हैं, अत उन सूत्रों को दिखाते हैं, उदाहरणों में स्वय कल्पना कर लेना।

सूत्र शेष के—( २ ) कगचजतदपयवा प्रायो लोप। ( ४ ) अधो मनयाम्। ( ३ ) उपरि लोप कगडतदपषसाम्। ( ५ ) सर्वत्र लवराम्।

आदेशविधायक—(१०) यशय्याभिमन्युषु। (२१) पर्यस्तपर्याणसौकुमार्येषु ल। ( ३० ) तस्य ट। ( २५ ) गर्ते ड। ( २८ ) ष्टस्य ठ। ( ३२ ) त्यथ्यद्यां चछजा।

आदि में लोपशेष—( ३ ) उपरि लोप कगडतदपषसाम्। ( ४ ) अधो मनयाम्। ( ५ ) सर्वत्र लवराम्।

आदि में आदेश—( २९ ) स्तस्य थ । ( ५३ ) स्पस्य । ( ३३ ) ध्यह्ययोर्झ । ( ३४ ) ष्कस्कक्षा ख ।

अयुक्त मे आदेश—( १९ ) टो ड । ( २० ) डस्य च । ( २६ ) शषो स । सख्यादिक शब्दों मे भी उक्त ही सूत्र लगते हैं ।

बिन्दु तथा ईकार, ऊकार से परे वर्ण को कभी भी द्वित्व नही होता है । जैसे—सख्या का सखा । वक्र -वको इत्यादि । ह्रस्व इकार, उकार के स्थान पर लक्ष्यानुसार दीर्घ ईकार, ऊकार होते है । जैसे—निष्पन्द का णीसदो । उत्सिक्त का ऊसित्तो—इत्यादि ॥ ५० ॥

## वर्गेषु युजः पूर्वः ॥ ५१ ॥

**युक्तस्य यौ शेषादेशावनादिभूतौ तयोर्द्वित्वेऽपि विहिते अध ऊर्ध्वे[1] च यौ वर्गेषु वर्णौ द्वितीयश्चतुर्थो वा[2] विहितस्तस्य पूर्व. प्रथमस्तृतीयो वा भवति । वर्गेषु युग्मस्य द्वितीयस्य प्रथम, चतुर्थस्य तृतीयो द्वित्वेन विधीयते, अयुग्मयो प्रथमतुतीयपञ्चमरूपयो शेषादेशयोस्तु तावेव भवत । शेषस्य, वक्खाणं ( ३–२ उभयत्र यूलोप, ४–१ ह्रस्व, ३–५० खूद्वित्वे, पूर्व० ख् = क्, २–४२ न् = ण्, ५–३० बि० ) । अग्घो ( ३–३ र्लोप, ५–१ ओ ) । मुच्छा ( ४–१ ह्रस्व ) । णिज्झरो । लुद्धो । णिब्भरो ( पू० दूलोपादि ) । आदेशस्य, दिट्ठी ( १–२८ सूत्रतोऽनुसन्धेयम् ) । लट्ठी ( २–३२ सू० स्प० ) । वच्छो ( ३–३० सू० स्प०, शेषम वदातम् ) । विप्फरिसो ( ३–३५ स्प् = स्फ्, ३–६२ विप्रकर्ष, पूर्वस्वरतया रिकारश्च, २–४३ श् = स्, ५–१ ओ ) । णित्थारो ( २–४२ न् = ण्, ३–१२ स्त् = थ्, शे० स्प० ) । जक्खो ( १–३१ सू० स्प० ) । लच्छी ( ३–३० सू० स्प० ) । अट्ठी ( ३–११ सू० स्प० ) । पुप्फ ( ३–३५ सू० स्प० । ३–५० सर्वत्र द्वित्वम् ) । व्याख्यानम्, अर्घ, मूर्च्छा, निर्झरः, लुब्ध, निर्भर, दृष्टि., यष्टि, वक्ष, विस्पर्श, निस्तार., यक्ष, लक्ष्मी, अस्थि, पुष्पम् ॥ ५१ ॥**

वर्गे[3] युज पूर्व —कवर्गादिके पञ्चवर्गमध्ये शेषादेशयोद्वित्वे विहिते, युज = समाक्षरस्य द्वितीयस्य चतुर्थस्य वा द्वित्वे कृते तस्मादेव पूर्व -यथाक्रम स्वाव्यवहितपूर्वगतो वर्ण द्वितीयस्य प्रथम चतुर्थस्य तृतीयो वर्णो भवति । पूर्वं बहुषूदाहरणेषु प्रपञ्चितम् । अथापि अभ्यासाय किञ्चिदुदाह्रियते—सौख्यम् = सोक्ख । मोक्ष = मोक्खो । विघ्न = विग्घो । व्याघ्र = वग्घो । मूर्छित = मुच्छिओ । निर्झर = णिज्झरो । 'ओत्व सह नकारेण स्यादितो निर्झरेऽपि वा' । ओज्झलो । गोष्ठी = गोट्ठी । गुणाढ्य = गुणड्ढो । पार्थिव = पत्थिओ । अध्वग = अद्धओ । गुल्फ = गुप्फो । अभ्यास =

१ क० पु० ऊर्ध्वेग । अ० पा० । २ क० पु० 'अवशिष्टो विहितो य ' अ० पा० ।
३ सजीवन्यनुसारी पाठ एष ।

अब्भासो । नक्षत्रम् = णक्खत्त । लक्ष्मी =लच्छी । उपाध्याय = उवज्झाओ । धृष्ट = धिट्ठो । वृद्ध = वुड्ढो । विश्वस्त = वीसत्थो । पुष्पितम् = पुप्फिअ । विह्वल = विब्भलो । पूर्वोक्तै सूत्रै प्राय सेत्स्यन्ति ॥ ५१ ॥

कवर्गादि पाँच वर्गों के वर्ण को द्वित्व करने पर जो सम अक्षर है अर्थात् दूसरा अथवा चौथा अक्षर है उसके द्वित्व करने पर उसका पूर्व अर्थात् द्वितीय का पूर्व प्रथम एव चतुर्थ का पूर्व तृतीय आदेश हो । तात्पर्य यह कि द्वितीय को द्वित्व करने पर उसके प्रथम द्वित्व वर्ण को उस वर्ग का क च ट त प आदेश होगा एव चतुर्थ को द्वित्व करने पर उसका ग ज ड द ब आदेश होगा । एतदनुकूल ही सब उदाहरण हैं ॥ ५१ ॥

## नीडादिषु ॥ ५२ ॥

नीड इत्येवमादिषु अनादौ वर्तमानस्य च द्वित्व भवति[1] । णेड्ड (स्पष्टम्), 'एन्नीडापीडे'( १-१९ )त्यादिना एत्वम् । सोत्त ( ३-३ र्लोप, ४-६ अन्त्यलोप, ५-३० बिन्दु ) । पेम्म ( ३-३ र्लोप, बाहुलकाद् उभयत्र ४-१८ प्रवृत्तिर्न, शेष पूर्ववत् ) । वाहित्तं[2] (२-२ य्लोप, १-२८ ऋ = इ, ५-३० बिन्दु ) । उज्जुओ[3] ( १-२९ ऋ = उ, २-२ क्लोप, ५-१ ओ ) । जणओ ( २-४२ न् = ण्, २-२ क्लोप, ५-१ ओ ) । जोव्वण( १-४१ औ = ओ, २-३१ य् = ज्, २-४२ न् = ण्, ५-३० बिं० ) । नीडम्, स्रोत, प्रेम, व्याहृतम्, ऋजुक, जनक, यौवनम् ॥५२॥

नीडादिषु—एषु अनादौ स्थितस्य द्वित्वम् । नेड्ड । जोव्वण । तुण्हीको । पेम्मो । एक्को । वाहित्तो । उज्जुओ । सोत्तो । चल्लिओ । मडुक्को ॥ ५२ ॥

नीडादिक शब्दों में अनादि स्थित वर्ण को द्वित्व हो । ( नीडम् ) णेड्ड । 'एन्नीडापीड' से एकार । ( यौवनम् ) १४ से ओकार । २४ से ज । २५ से ण । जोव्वण । ( तूष्णीक ) 'ह्नस्नष्ण०' ३।३३ से ह्न । ५९ से उकार । तुण्हीको । ( प्रेम ) ५ से र लोप । पुस्त्व । पेम्मो । ( एक ) एक्को । ( व्याहृत ) ४ से यलोप । १० से ऋ को इकार । वाहित्तो । ( ऋजुक ) ११ से उ । २ से कलोप । उज्जुओ । ( स्रोतस् ) ६० से सलोप । ५ से रेफलोप । पुंस्त्व । सोत्तो । ( चलित ) २ से तलोप । चल्लिओ । ( मण्डूक ) ५९ से ऊकार को उकार । मडुक्को । ये उदाहरण दिखाये हैं । लक्ष्यानुसार अन्य भी कल्पना कर लेना ॥ ५२ ॥

नोट--नं० ( १४ ) औत ओत् । ( २४ ) आदेर्यो ज । ( २५ ) नो ण सर्वत्र । ( ५९ ) उदूतो मधूकादिषु । ( ५ ) सर्वत्र लवराम् । ( ४ ) अधो मनयाम् । ( १० ) इदृष्यादिषु । ( ११ ) उदृत्वादिषु । ( २ ) कगचजतदपयवां प्रायो लोप । ( ६० ) अन्त्यस्य हल ।

## आम्रताम्रयोर्वः ॥ ५३ ॥

---

१ अनादेशत्वादप्राप्ते विधिरयम् । २ इत्कृपादौ ८।१।१२८ । हेमसूत्रे कृपाद्यन्तर्गतेर्व्याहृतस्य पाठात् । ३ ऋणर्ज्वृषभर्त्वृषौ वा ८।१।१४१ । इति हेमानुसारत रिजू । उजू ।

आम्र-ताम्र इत्येतयोर्द्वित्वेन वकारो भवति । अव्वं । तव्वं[1] (४-१ ह्रस्व सयोगे, ३-५० वृद्वि०, ५-३० बि० ) ॥ ५३ ॥

आम्रताम्रयोर्व —अनयोर्द्वित्वे व स्यात् । स च लक्ष्यवशादेकदेशे एव । अबो । तबो ॥ ५३ ॥

आम्र ताम्र के द्वित्व होने पर लक्ष्यानुसार अन्तिम म को व हो । ( आम्र ) ५ से रेफलोप । अबो । ( ताम्र ) तबो । उभयत्र ५८ से आकार को अकार । फल अर्थ में-( आम्रम् ) अब । ( ताम्र पात्रम् ) तब ॥ ५३ ॥

## न रहोः ॥ ५४ ॥

रेफहकारयोर्द्वित्वं न भवति । धीरं ( १-३९ सू० स्पष्टम् ) । तूरं (३-१८ सू० स्पष्टम्) । जीहा (१-१७ सू० द्रष्टव्यम्) । बाहो ( ३-३८ सू० स्प० ) । धैर्यम् , जिह्वा, वाष्प ॥ ५४ ॥

न रहो —अनयोर्द्वित्व न स्यात् । सुदेर । अच्छेर । पेरतो । विहलो । काहायणो ॥ ५४ ॥

रेफ और हकारको द्वित्व न हो । (सौन्दर्यम्) ६५से औ को उकार । ३१ से एकार । 'तूर्यधैर्य०' से र्य को रकार । उसे द्वित्व प्राप्त था, निषेध हो गया । सुदेर । (आश्चर्यम्) ५८ से आ को अकार । ६४ से श्च को छकार । द्वित्वादि पूर्ववत् । 'तूर्यधैर्य०' से र्य को रकार । ३१ से एकार । रेफ को द्वित्व नहीं । अच्छेर । (पर्यन्त ) पूर्ववत् रेफ और निषेध । पेरतो । ( विह्वल ) ५ से वकारलोप । उक्त सूत्र से ह के द्वित्व का निषेध । विहलो । ( कार्षापण ) ५८ से अकार । १८ से प को व । 'कार्षापणे ह ' इससे हकार । द्वित्व निषेध । काहावणो ॥ ५४ ॥

## आङो ज्ञस्य ॥ ५५ ॥

आङ उत्तरस्य ज्ञ इत्येतस्यादेशस्य द्वित्व न भवति । आणा ( ३-४४ ज्ञ् = ण ) । आणत्ती ( पूर्ववत् ज्ञ् = ण्, ३-१ प्लोप, ३-५० तद्वि०, ५-१८ दीर्घ. ) । आज्ञा, आज्ञप्ति । आङ इति किम् ? सण्णा ( ३-४४ ज्ञ् = ण् , ३-५० णद्वित्वम् ) । सज्ञा ॥ ५५ ॥

आङो ज्ञादेशस्य[2]—आङ परस्य ज्ञादेशस्य द्वित्व न स्यात् । आणा । आणत्ती । आङ परत्वाभावात् नेह-विण्णाण । अहिण्णाण ॥ ५५ ॥

आङ् से पर ज्ञादेश को द्वित्व न हो । ( आज्ञा ) 'म्नज्ञ०' ( ३।४३ ) से णकार आदेश । आणा । ( आज्ञप्ति ) ३ से पलोप । पूर्ववत् णकार । आणत्ती । जहाँ आङ् नहीं होगा, वहाँ द्वित्व हो जायगा । ( विज्ञानम् ) २५ से न को ण । 'म्नज्ञ०' से ज्ञ को ण । ६ से द्वित्व । विण्णाण । एवम् ( अभिज्ञानम् ) २३ से भ को ह । अन्य कार्य पूर्ववत् । अहिण्णाण ॥ ५५ ॥

---

१ हेमस्तु ताम्राम्रे म्ब '। अनयो सयुक्तस्य मयुक्तो वो भवति । अम्ब । तम्ब-इत्याह ।

२ सजीवन्यादिसमत एव पाठः ।

## न बिन्दुपरे ॥ ५६ ॥

अनुस्वारे परे द्वित्व न भवति। संकन्तो ( ३-३ रेफलोप, ४-१७ वर्गान्त०, ४-१ ह्रस्व, ५-१ ओ )। सझा ( ३-२८ ध्य् = झ्, ४-१७ वर्गान्त० )। संक्रान्त, सन्ध्या[1] ॥ ५६ ॥

## समासे वा ॥ ५७ ॥

समासे शेषादेशयोर्वा द्वित्व भवति। णइग्गामो, णइगामो ( २-४२ न् = ण्, २-२ द्लोप, ३-३ रलोप, ४-१ ह्रस्व, द्वित्वाभावे तु यथाव दोकार ५-१ ओ)। कुसुमप्पअरो (३-३ रलोपे, २-२ क्लोप, ५-१ ओ)। कुसुमपअरो ( प्द्वित्वाभाव, शे० पू० )। देवत्थुई, देवथुई ( ३-१२ स्त् = थ्, ३-५१ थ् = त्, २-२ त्लोप, ५-१८ दीर्घ )। आणालक्खभो, आणालखभो (४-२९ परिवृत्तौ आनाले जाते, २-४२ न् = ण, ३-१४ स्त् = ख्, ३-५१ ख् = क्, ४-१७ वर्गान्त०, ५-१ ओ)। नदीग्राम, कुसुमप्रकर, देवस्तुति, आलानस्तम्भ ॥ ५७ ॥

समासे वा—समासवशादनादितामापन्नयो शेषादेशयोर्वा द्वित्वम्। मरुत्थली, मरुथली। गुणज्जेट्ठो, गुणजेट्ठो। घरद्दार, घरदार। अत्थग्गहो, अत्थगहो। घणत्थणी, घणथणी। विरहक्खमा, विरहखमा। अगप्फसो, अगफसो। 'द्वित्व क्वापि समासे स्याद् अशेषादेशयोरपि'। सप्पिआसो, सपिआसो। बद्धप्फलो, बद्धफलो। सिहरक्खडो, सिहरखडो ॥ ५७ ॥

समास होने पर मध्यगत लोप से शेष अथवा आदेश से जायमान वर्ण को विकल्प से द्वित्व हो। ( मरुस्थली ) ३ से सलोप। मरुत्थली, मरुथली। सर्वत्र ६ से द्वित्व होगा। ( गुणज्येष्ठ ) ४ से यलोप। ष्ठ में ३ से षलोप। गुणजेट्ठो, गुणजेट्ठो। ( गृह द्वारम् ) ४ से वलोप। घरद्दार, घरदार। 'गृहस्य घरोऽपतौ' (४।३४) घर आदेश। ( अर्थग्रह ) ४ से दोनों रेफों का लोप। अत्थग्गहो, अत्थगहो। ( घनस्तनी ) २९ से स्त को थ। २५ से न को ण। घणत्थणी, घणथणी। ( विरहक्षमा ) ३४ से क्ष को ख। विरहक्खमा, विरहखमा। ( अङ्गस्पर्श ) ५ से रेफलोप। २६ से श को स। 'स्पस्य' (३।३६) से फ आदेश। द्वित्वविकल्प। अगप्फसो, अगफसो। ६१ से अनुस्वारागम। कहीं पर समास में, लोप से शेष न होने पर अर्थात् विना लोप के विषय में एवम् आदेश के विना केवल स्वाभाविक अक्षर को विकल्प से द्वित्व हो। ( सपिपास ) पूर्व पकार को द्वित्व। २ से दूसरे पकार का लोप। सप्पिआसो। पक्ष में—सपिआसो। एवम् ( बद्धफल ) बद्धप्फलो, बद्धफलो। ( शिखरखण्ड ) २६ से श को स। २३ से ख को ह। विकल्प से द्वित्व। ७ से ककार। सिहरक्खडो, सिहरखडो ॥५७॥

नो०— न (५८) अदातो यथादिषु वा। (६५) उत्सौन्दर्यादिषु। (३१) ए शय्यादिषु। (६४) अत्सप्सा छ। (५) सर्वत्र लवराम् (१८) पो व। (३) उपरि लोप कगडतदपषसाम्। (२५) नो ण सर्वत्र। (६) शेषादेशयोर्द्वित्वम

---

१ नेद सूत्र सजीवन्यादौ।

नादौ । (२३) खघथधभां ह । (४) अधो मनयाम् । (३४) ष्कस्कक्षां ख । (२६) शषो स । (६१) वक्रादिषु ।

## सेवादिषु च ॥ ५८ ॥

सेवा इत्येवमादिषु चानादौ वा द्वित्वं भवति । सेव्वा, सेवा (२-२ प्रायोग्रहणात् वलोपो न, शेषं स्पष्टम्) । एक्क, एअं (द्वित्वाभावे २-२ क्लोप, ५-३० बि०) । णक्खो (२-४२ न्=ण्, द्वित्वपक्षे ३-५१ ख्=क्, ५-१ ओ) । णहो (द्वित्वाभावे २-२७ ख्=ह्, ५-१ ओ) । देव्वं, दइवं (१-३७ सू० स्प०) । असिव्वं, असिव । तेलोक्क (१-३५ सू० स्प०), तेलोअं (द्वित्वाभावे, ३-१ क्लोप, शे० पू०) । णिहित्तो (२-४२ न्=ण्, द्वित्वे, ५-१ ओ) । णिहिओ (द्वित्वाभावे २-२ त्लोप, शे० पू०) । तुण्हिक्को, (३-३३ ष्ण्=ह्ण, ह्रस्व संयोगे, कस्य द्वित्वे, ५-१ ओ) । तुह्णिओ (द्वित्वाभावे, २-२ क्लोप, शे० पू०) । कण्णिआरो, कणिआरो (३-३ र्लोप, २-२ क्लोप, द्वित्वभावाभावौ च पू०, ५-१ ओ) । दिग्घ (३-३ र्लोप, ३-५१ घ्=ग्, ह्रस्व सयोगे इति दी=दि, ५-३० बि०) । दीह (द्वित्वाभावे रलोपे च असंयोगपरत्वात् ह्रस्वाभाव, २-२७ घ्=ह्, शे० स्पष्टम्) । रत्ती (३-३ रलोप, ४-१ ह्र०) । राई (३-१ त्लोप, ३-३ र्लोप, ५-१८ दीर्घ) । दुक्खिओ, (खद्वित्वे, ३-५१ ख्=क्, २-२ त्लोप, ५-१ ओ) । दुहिओ (द्वित्वाभावे २-२७ ख्=ह्, शे० पू०) । अस्सो, असो (१-२ सू० द्रष्टव्यम्) । इस्सरो (३-३ व्लोप, २-४३ श्=स्, द्वित्वे, ह्रस्व सयोगे ई=इ, ५-१ ओ) । ईसरो (द्वित्वाभावे ह्रस्वाभाव, शे० पू०) । विस्सासो, वीसासो । णिस्सासो, णीसासो (२-४२ न्=ण्, शे० पू०) । रस्सी, (३-२ म्लोप, २-४३ श्=स्, सद्वित्वे ५-१८ दीर्घ) । रसी (द्वित्वाभाव, शे० पू०) । मित्तो (३-३ र्लोप, ५-१ ओ) । मिओ[1] (द्वित्वाभावे ३-१ त्लोप, शे० पू०) । पुस्सो, (३-२ य्लोप, २-४३ ष्=स्, ५-१ ओ) । पुसो (द्वित्वाभावे, शे० पू०) । सेवा, एक, नख, दैवम्, अशिवम्, त्रैलोक्यम्, निहितम्, तूष्णीक, कर्णिकार, दीर्घम्, रात्रि, दुःखित, अश्व, ईश्वर, विश्वास, निश्वास, रश्मि, मित्रम्, पुष्य । उभयत्र विभाषेयम् । सेवादीनामप्राप्ते[2] दीर्घादीनां च प्राप्ते ॥ ५८ ॥

---

१ 'तइ इन्दो निच्चिन्दो विहरदु अन्देउरम्भि सो दाव । इ दस्स तावमित्त हवेसि महिषा मिआ तुमय' ॥ इति कुमारपालचरिते ७ सर्गे ९३ तम पद्यम् । 'त्वया इन्द्रो निश्चिन्तो विहरतु अन्तःपुरे स तावत् । इन्द्रस्य तावन्मित्र भवसि महोस्वामिन् त्वम्' ॥—एतदनुसारेण सुहृद्वाचकमित्रशब्दो नपुसक, सूर्य्यवाचकस्तु पुल्लिङ्गो भवितुमर्हति । २ अनादेशत्वादशेषाच्चेति शेष ।

सेवादिषु च—एषु द्वित्वं वा स्यात्। उभमत्र विभाषेयम्। 'सेवा कौतूहलं दैवं निहितं नखजानुनी। इवार्थका निपाताश्च एतदाद्यास्तथापरान्'॥ एषु द्वित्वस्य अप्राप्तत्वाद् विधिमुखेन विकल्पः। 'त्रैलोक्यं कर्णिकारश्च वेश्या भूर्जश्च दुःखितः। एवं जातीयकान् शब्दान् विदुः सेवादिकान् बुधाः'॥ एषु लोपशेषत्वान्नित्यप्राप्तस्य द्वित्वस्य निषेधमुखेन विकल्पः। सेव्वा, सेवा। कोउहल्लं, कोउहलं। देव्वं, दइवं। णिहित्तं, णिहिअं। णक्खो, णहो। जण्णुआ, जाणुआ। सखव्व, सखोव। इवार्थे इव पिव मिव विव-व्व-एते निपात्यते। एषु अप्राप्तौ विधानम्। तइल्लोक्कं, तइल्लोअं। कण्णिआरो, कणिआरो। वेस्सा, वेसा। भुज्जा, भुआ। दुक्खिओ, दुहिओ। एषु नित्यं प्राप्तं द्वित्वं विकल्पेन निषिध्यते॥ ५८॥

सेवादिक शब्दों में विकल्प से द्वित्व हो। इन सेवादिक शब्दों में कहीं लोप से शेष अथवा आदेश स्वरूप न होने से द्वित्व अप्राप्त था और कहीं लोपशेष अथवा आदेशजन्य होने से नित्य द्वित्व प्राप्त था उसका विधि निषेध मुख से विकल्प है। तात्पर्य यह कि सेवादिगणपठित कुछ शब्दों में विकल्प से द्वित्व का विधान है और कुछ शब्दों में नित्य प्राप्त द्वित्व का विकल्प से निषेध है। जैसे—सेवा, कौतूहल, दैव, निहित, नख, जानु और इवार्थक पिव मिवादिक-इनमें द्वित्व अप्राप्त था। त्रैलोक्य, कर्णिकार, वेश्या, भूर्ज, दुःखित-इस प्रकार के शब्दों में शेषाक्षर होने से नित्य द्वित्व प्राप्त था, विकल्प से विधि निषेध होगा। जैसे—(सेवा) अप्राप्त द्वित्व का विकल्प से विधान। सेव्वा। पक्ष में-सेवा। इसी प्रकार अन्यत्र भी जानना। (कौतूहलम्) १४ से औ को ओकार। २ से तलोप। ५९ से उकार। विकल्प से द्वित्व। कोउहल्लं, कोउहलं। (दैवम्) 'दैवे वा' (१-३८) से ऐ को अइ। विकल्प से वद्वित्व। दइव्वं। १३ से ऐ को एकार। देव्वं। (निहितम्) २५ से न को ण। णिहित्तं। २ से तलोप। णिहिअं। (नख) न को ण। णक्खो। २३ से ख को हकार। णहो। (जानुकम्) ५८ से अकार। २ से कलोप। २५ से णकार। जण्णुअं, जाणुअं। (सख इव) निपात से इव को व आदेश, विकल्प से वद्वित्व। सखव्व। एवम्—सखप्पिव। सखम्मिव। सखव्विव। पूर्वोक्त सेवादिक तथा पिव आदिक में अप्राप्त द्वित्व विकल्प से हो गया। तथा (त्रैलोक्यम्) ४ से यलोप। 'दैत्यादिष्वइत्' (१+३७) इससे ऐकार को 'अइ' आदेश। ५ से रेफलोप। विकल्प से ककार को द्वित्व। यहा यकार का लोप करने से शेष ककार था, अतः नित्य द्वित्व प्राप्त था, इसने वैकल्पिक निषेध कर दिया। तइलोक्कं। तइल्लोअं। २ से कलोप। (कर्णिकार) २ से कलोप। ५ से रेफलोप, शेष णकार को नित्य द्वित्व प्राप्त था, विकल्प से निषेध कर दिया। कण्णिआरो। कणिआरो। (वेश्या) ४ से यलोप। २६ से श को स। वेस्सा, वेसा। (भूर्जा) ५ से रेफलोप। ५९ से ऊकार को उकार। द्वित्व। भुज्जा। पक्ष में-२ से जलोप। भुआ। (दुःखित) विसर्ग को सकार मानकर ३ से लोप। २ से तकारलोप। द्वित्व। दुक्खिओ। पक्ष में—२३ से ख को ह। दुहिओ। उक्त इन उदाहरणों में विकल्प से निषेध होने से द्वित्व विकल्प से होगा॥ ५८॥

नोट—नं. (२) कगचजतदपयवां प्रायो लोपः। (२६) शषोः सः। (२३) खघ

थघभा ह । ( ७ ) वर्गेषु युज पूर्व । ( १४ ) औत ओत् । ( ५९ ) उदूतो मधूकादिषु। ( १३ ) ऐत एत् । ( २५ ) नो ण सर्वत्र । ( ५८ ) अदातो यथादिषु वा ।

## विप्रकर्षः ॥ ५९ ॥

**अधिकारोऽयम् । आपरिच्छेदसमाप्तेर्युक्तस्य विप्रकर्षो भवति ॥ ५९ ॥**

विकर्ष [1]—इत ऊर्ध्वं युक्तस्य वर्णस्य विकर्ष =विश्लेषो विधेय —इत्यधिक्रियते ॥५९॥

'विकर्ष '–यह अधिकार सूत्र है अत इसके उपरान्त परिच्छेद की समाप्ति तक जो कार्य कहेगे उसमें वर्ण विश्लेष अर्थात् सयुक्त वर्णों का विभाग करना होगा ॥ ५९ ॥

## क्लिष्टश्लिष्टरत्नक्रियाशार्ङ्गेषु तत्स्वरवत्पूर्वस्य ॥ ६० ॥

**क्लिष्टादिषु युक्तस्य विप्रकर्षो भवति विप्रकृष्टस्य च य पूर्वो वर्णो निरर्थस्तस्य तत्स्वरता भवति । तेनैव पूर्वेण स्वरेण पूर्वो वर्ण सार्थो भवति इत्यर्थ । किलिट्ठं ( ष्टकारविप्रकर्षे लकारेण सह पूर्वस्वरतया च किलिजाते, ३–१० ष्ट = ठ, ३–५० ठद्वि०, ३–५१ पूर्व०, ठ् = ट्, ५–३० बिन्दु )। सिलिट्ठं ( २–४३ श् = स्, शे० पू० )। रअण ( विप्रकर्षात् रत–जाते, ३–१ त्लोप, २–४२ न् = ण्, ५–३० बि० )। किरिआ ( २–२ य्लोप, विप्रकर्षादिकं पू० )। सारंगो ( २–४३ श् = स्, ४–१७ बिं०, ५–१ ओ ) ॥ ६० ॥**

क्लिष्टश्लिष्टरत्नक्रियाशार्ङ्गेषु तत्स्वरवत्पूर्वस्य—एषु युक्तस्य वर्णस्य विकर्षो विधेय, तस्य युक्तस्य य स्वर तद्वत्स्वरो विकर्षे सति पूर्ववर्णस्य भवति । किलिट्ठ । सिलिट्ट । अत्र पूर्वं प्राप्तत्वात्, क्लिश्लि इत्येतयोरेव विकर्ष, न तु ष्टस्य । रअण । किरिआ । सारगो ॥ ६० ॥

क्लिष्ट-श्लिष्ट रत्न क्रिया शार्ङ्ग इन शब्दों में सयुक्त अक्षरों का विभाग अर्थात् पृथक्-पृथक् उनको करना और जो स्वर उनमें है वही स्वर विभक्त पूर्व वर्ण के साथ भी होगा । जैसे—क्लिष्ट में ककार पृथक् हुआ और ल में इकार स्वर है अत ककार में भी इकारस्वर हुआ । २८ से ष्ट को ठकार । ६ से द्वित्व । ७ से टकार । किलिट्ठ। ष्ट में विकर्ष क्यों नहीं ? क्रम प्राप्त क्लि श्लि में ही विकर्ष होगा । प्रथम के त्याग में कोई प्रमाण नही । एवम् ( श्लिष्टम् ) विकर्ष तथा तत्स्वरता होने पर २६ से श को सकार । ष्ट को ठकारादि पूर्ववत् । सिलिट्ठ । ( रत्नम् ) तकार नकार का विकर्ष । २ से तकारलोप । २५ से णकार । रअण । ( क्रिया ) ४ से यलोप । इकारयुक्त ककार का विकर्ष । किरिआ । ( शार्ङ्ग ) २६ से श को स । अकारस्वरयुक्त रेफ का विकर्ष। सारगो ॥ ६० ॥

नोट—न ( ४ ) अधो मनयाम् । ( ५ ) सर्वत्र लवराम् । ( २ ) कगचजतदपयवां प्रायो लोप । ( २६ ) शषो स । ( ५९ ) उदूतो मधूकादिषु । ( ३ ) उपरि लोप कगडतदपषसाम् । ( २३ ) खघथधभा ह । ( २८ ) ष्टस्य ठ । ( २५ ) नो ण सर्वत्र।

---

१ सजीवनीस्थ पाठ ।

## कृष्णे वा ॥ ६१ ॥

**कृष्णशब्दे युक्तस्य वा विप्रकर्षो भवति, पूर्वस्य च तत्स्वरता। व्यवस्थितविभाषेयम्। तेन वर्णे नित्यं विप्रकर्ष, विष्णौ तु न भवत्येव। कसणो (१-२७ ऋ=अ, ष्णस्य विप्रकर्षे षण जाते, २-४३ ष्=स्, २-४२ ण्=ण्, ५-१ ओ)। कह्णो (३-३३ सू० स्प०)॥ ६१॥**

कृष्णे वा—कृष्णशब्दे युक्तस्य वा विप्रकर्ष स्यात्, पूर्वस्य तत्स्वरवत् स्वरवत्ता च स्यात्। कसणो। पक्षे—कण्हो। 'कृष्णशब्दे विकर्षो वा वर्णेऽर्थे न तु नामनि।' तेन वासुदेवे नाम्नि 'कण्ह' इति॥ ६१॥

कृष्णशब्द में युक्त वर्ण का विकर्ष अर्थात् पृथक् विभाग होगा और उस स्वर के समान विभक्त पूर्व वर्ण में भी स्वर हो जायगा। (कृष्ण) ९ से ऋ को अकार। विभक्त अकारस्वरयुक्त होने पर कषण हुआ। २६ से ष को स। कसणो। पक्ष में—'ह्लक्ष्ण०' (३+३३) से ण्ह आदेश। कण्हो। वर्ण अर्थ में कृष्णशब्द का विकर्ष होगा, वसुदेवापत्य कृष्ण नाम में नहीं। वहा तो 'कण्हो' यही होगा, साधुत्व पूर्ववत्॥ ६१॥

## इः श्रीह्रीक्रीतक्लान्तक्लेशम्लानस्वप्नस्पर्शहर्षार्हगर्हेषु ॥ ६२ ॥

**एषु युक्तस्य विप्रकर्षो भवति, पूर्वस्य इकार तत्स्वरता च भवति। सिरी (२-४३ श्=स्, विप्रकर्षत्वे, पूर्वस्य इत्वे, तत्स्वरताया च सिरी इति जातम्)। एवं-हिरी। किरीतो[1]। किलन्तो (विप्रकर्षे पूर्वस्ये त्वे, ४-१७ वर्गान्तो बिन्दुर्वा, ५-१ ओ)। किलेसो (स्पष्टम्)। मिलाणं (पूर्ववत् इत्वं, तत्स्वरता च, २-४२ न्=ण्, ५-३० बिं०)। सिविणो (१-३ सू० स्प०)। फरिसो (३-३५ स्प्=फ्, इत्वं तत्स्वरता च, २-४३ श्=स्, ५-१ ओ)। एवमुत्तरत्रापि। हरिसो। अरिहो। गरिहो (स्पष्टा)। श्री, ह्री, क्रीत, क्लान्त, क्लेश, म्लानम्, स्वप्न, स्पर्श, हर्ष अर्ह, गर्ह.॥ ६२॥**

इत् श्रीह्रीक्लान्तक्लेशम्लानस्वप्नस्पर्शादर्शहर्षार्हेषु[2]—एषु युक्तस्य विकर्ष स्यात् विकृष्टस्य पूर्ववर्णस्य इकारस्वरता च स्यात्। सिरी। हिरी। किलतो। किलेसो। मिलाणो। सिविणो। अत्र 'स्व' इत्यस्य विकर्ष कथ न? तथाभूतप्रयोगादर्शनात्। वेत्य नुवर्त्य व्यवस्थितविभाषाश्रयणेन क्रमप्राप्त व्यतिक्रम्यापि 'प्न' इत्यस्य विकर्ष। वेत्यनुवर्तते। फरिसो, फसो। दरिसण, दसण। क्वचिन्नित्यम्-आअरिसो। हरिसो। उक्करिसो। अमरिसो। वरिसो। परिसवरो। क्वचिन्नैव-वासारत्त। वाससअ। र्हस्य क्वचिन्नित्यम्-अरिहो। गरिहा। वरिहिणो। क्वचिन्नैव-दसारो। (दशार्ह)। 'रेफस्याधो हकारस्य लोपो भवति कुत्रचित्। प्लोषे प्लुष्टे भवेत् स्नायौ श्लोके विश्लेष इत्तथा'॥ पिलोसो। पिलुट्ठो। सिणाऊ। सिलोओ। 'वा विश्लेषो भवेद् वज्रे पूर्वस्य स्वर एव

---

१ प्रायोग्रहणान्न तलोप। २ सजीवन्यनुसारी पाठ एष।

वा' । वइर । वज्ज । 'पूर्वशब्दे विकर्षो वा पूर्वस्येत्व च वस्य म' । पुरिम, पुव्व ॥६२॥

श्री ह्री क्लान्त क्लेश म्लान स्वप्न स्पर्श आदर्श हर्ष अर्ह-इन शब्दों मे युक्त वर्ण का विकर्ष हो अर्थात् युक्त वर्ण का पृथक् पृथक् विभाग हो और विभक्त पूर्व वर्ण के साथ इकार स्वर हो। (श्री) का श् री विभाग हो गया और श के साथ इकार स्वर लग गया। २६ से श को स। सिरी। एवम्-(ह्री) हिरी। (क्लान्त) ५८ से आकार को अकार। किलतो। (क्लेश) २६ से सकार। किलेसो। (म्लान) २५ से न को ण। मिलाणो। (स्वप्न) ५ से वलोप। 'उदीषत्' (१+३) सकार के साथ इकार। पकार नकार का विकर्ष, इकार। १८ से प को व। २५ से न को णकार। सिविणो। 'स्व' का विकर्ष क्यों नही? वैसा प्रयोग नहीं होता है। अथवा वा की अनुवृत्ति से व्यवस्थित कार्य होगा, अत पूर्व का त्याग करके द्वितीय अक्षर 'प्न' में विकर्ष, इकार होगा। पूर्ववत् णकार। सिविणो। वा पद की अनुवृत्ति करके स्पर्श आदर्श में विकल्प से विकर्ष, इकार होगा। (स्पर्श) 'स्पस्य' (३+३६) से स्प को फ। रेफ और शकार का विकर्ष। रेफ के साथ इकार। २६ से श को सकार। फरिसो। पक्ष में—६१ से अनुस्वारागम। ५ से रेफलोप। २६ से सकार। फादेश पूर्ववत्। फसो। एवम्-(दर्शनम्) विकर्ष पूर्ववत्। २५ से नकार को णकार। दरिसण। पक्ष में-दसण। पूर्ववत् अनुस्वारादि। कही पर नित्य विकर्ष और इकार होगा। (आदर्श) २ से दकार का लोप। रेफ और शकार का विकर्ष, इकार। २६ से श को स। आअरिसो। (हर्ष) हरिसो। हर्ष पद से रेफ षकार का विकर्षादि अन्यत्र भी जानना। (उत्कर्ष) ३ से तलोप। ६ से कद्वित्व। रेफ षकार का विकर्ष। २६ से ष को स। उक्करिसो। एवम्-(अमर्ष) अमरिसो। (वर्ष) वरिसो। (वर्षवर) वरिसवरो। कहीं पर 'र्ष' का विकर्ष नहीं होगा। (वर्षारात्र) 'आ समृद्ध्यादिषु वा' (१+२) से आकार। ५ से रेफलोप। २६ से ष को सकार। ५८ से रेफ के आकार को अकार। ६ से तद्वित्व। वासारत्तो। (वर्षशतम्) पूर्ववत्। आकार, रेफलोप, ष श को सकार। २ से तकार का लोप। वाससअ। 'र्ह' का कहीं नित्य विकर्ष और इकार, और कही नहीं। (अर्ह) अरिहो। (गर्हा) गरिहा। (बर्हिण) बरिहिणो। कहीं नहीं होगा। जैसे (दशार्ह) २६ से श को स। रेफ के अधःस्थित हकार का कही लोप होता है—इससे हकार का लोप हो गया। दसारो। 'प्लोष प्लुष्ट स्नायु श्लोक और विश्लेष शब्दों में युक्त वर्ण का विभाग हो और विभक्त पूर्व वर्ण के साथ इकार हो'। (प्लोष) २६ से ष को स। पिलोसो। (प्लुष्ट) २८ से ष्ट को ठ। ६ से द्वित्व। ७ से टकार। पिलुट्ठो। (स्नायु) सकार का विभाग, इकार। २५ से णकार। २ से यलोप। सिणाऊ। (श्लोक) २६ से श को स। २ से कलोप। सिलोओ। वज्र शब्द में विकल्प से युक्त का विकर्ष और पूर्व में इकार हो। (वज्रम्) विकर्ष इकार होने पर 'वजिरम्' हुआ। २ से जलोप। वइर। पक्ष में-रेफलोप, द्वित्व। वज्ज। पूर्व शब्द में युक्त का विकर्ष, इकार योग और वकार को मकार। (पूर्वम्) ५९ से ऊकार को उकार। विकर्ष, मकारयोग, व को म। पुरिम। पक्ष में-५ से रेफलोप, २ से द्वित्व। पुव्व ॥ ६२ ॥

नोट—न (९) ऋतोऽत्। (२६) शषो स। (५८) अदातो यथादिषु वा। (२५) नो ण सर्वत्र। (५) सर्वत्र लवराम्। (१८) पो व। (६१) वक्रादिषु। (२) कगचजतदपयवा प्रायो लोप। (३) उपरि लोप कगडतदपषसाम्। (६)

बह्माणो ब्रह्मणो वा स्याद् यूनो जूआण इत्यपि।
राज्ञो राआण आदेशो ग्राव्णो गावाण इत्यपि॥
[1]अर्यम्णस्त्वज्जमाणो वा पूष्ण पूसाण इत्यपि।
अद्धाणो त्वध्वन स्थाने ब्रह्माद्या एवमादय॥

सर्वेष्वपि आदेशेषु अकारान्तत्वात् ग्रामशब्दवद् रूपाणि ज्ञेयानि। तत एव तेषां साधुत्व कल्पनीयम्। अनादेशपक्षे तु इदद्वित्वे आत्मन्‌शब्दवत्, अन्यविभक्तिषु राजन् शब्दवदविशेषेण साधनीयानि॥ ४७॥

इति 'चन्द्रिका' व्याख्याया पञ्चम परिच्छेद।



ब्रह्मेति। आत्मन्-शब्द की तरह ब्रह्मादिकों को भी जानना, अर्थात् जैसे आत्मन्-शब्द को अप्पाण यह निपात आदेश होता है, ऐसे ही ब्रह्मन्-शब्द को भी बम्हाण आदेश होगा और बम्हाण-शब्द के रूप तत्साधुत्व अकारान्त ग्रामशब्द के समान जानना। (१) बम्हाणो, बम्हाणा। (२) बम्हाण, बम्हाणा। बम्हाणेण, बम्हाणेहिं। इत्यादि। और जहाँ बम्हाण आदेश नहीं होगा, वहाँ राजन् शब्द के समान इकारादेश और णकारद्वित्व के अतिरिक्त सब प्रक्रिया और रूप जानना। ब्रह्मादिक कौन-कौन हैं और किसको क्या आदेश होता है यह बताते हैं—बम्हाणो इति। ब्रह्मन्-शब्द को बम्हाण, युवन्-शब्द को जूआण, राजन् को राआण, ग्रावन् को गावाण, अर्यमन् को अज्जमाण, पूषन् को पूसाण और अध्वन् को अद्धाण आदेश होते हैं। ये ब्रह्मादिक बताये हैं। महाकवि-प्रयोगानुकूल तथा लोकव्यवहारानुकूल यह परिगणन कहा है। इन आदेशों में अकार अन्त पर है, अकारान्त शब्द के समान रूपसाधुत्व करना, जैसा प्रथम बता आये हैं। और जहाँ आदेश नहीं होगा वहाँ राजन्-शब्द के समान साधुत्व है। इति॥ ४७॥

टिप्पणी—भामह-व्याख्यानुकूल पञ्चम परिच्छेद समाप्त है। सर्वादिविभक्ति-सम्बन्धी कार्यविधायक षष्ठ परिच्छेद मानते हैं, परन्तु वस्तुत सुब्विधि-सम्बन्धी यह परिच्छेद है, अत चाहे सर्वादिगण के कार्यविधायक सूत्र हों चाहे इतर असर्वादि के सुब्विधिसम्बन्धी कार्य-विधायक सूत्र हों सब का सुब्विधि में परिगणन होगा। अत अभी पञ्चम ही परिच्छेद है। उसकी समाप्ति भामह के षष्ठ परिच्छेद की समाप्ति के साथ है। अस्तु।

इति 'प्रदीप' नामकहिन्दीव्याख्याया पञ्चम परिच्छेद।



---

१ 'उक्ष्ण उच्छाण इत्येव'-इति सुबोधिन्या पाठ।

# अथ षष्ठः परिच्छेदः

## सर्वादेर्जस एत्वम् ॥ १ ॥

**सर्वादेरुत्तरस्य जस एत्व भवति[1]। सव्वे ( ३-३ रलोप, ३-५० वद्वि० )। जे (२-२१ य = ज)। एवमग्रेऽपि ज्ञेयम्। ते (४-६ दलोप)। के ( ६-१३ किम् = क )। कद्दरे ( १२-२ त = द )। सर्वे। ये। ते। के। कतरे ॥ १ ॥**

[2]सर्वादे —अधिकारोऽयम्, 'द्वेर्दो' इति यावत्। अत पर यत् कार्यं तत्सर्वादेरधिकृत वेदितव्यम्। सर्व इत्यादिका सर्वादय पञ्चत्रिंशत्प्रसिद्धा ॥

जस एत्—सर्वादे परस्य जस एत् स्यात्। 'क्वचिदपि लोप' इत्यल्लोप। सव्वे। किम क। के। ये। ते। इमे। इतरे-इत्यादय ॥

सर्वादे -इति। 'सर्वादे' यह अधिकार सूत्र है। इसके अनन्तर 'द्वेर्दो' इस सूत्र तक जितने कार्य होंगे वे सर्वादिकों को होंगे। सर्व, विश्व इत्यादि सर्वादिक ३५ पैंतीस प्रसिद्ध हैं।

जस इति। सर्वादिक से पर जस को एकार हो। इससे एकार। 'क्वचिदपि लोप' से अल्लोप। सव्वे। 'किम क' से क आदेश। के। यद् का ये। एव ते, इमे, अण्णे, इतरे इत्यादिक जानना। व्यापक प्रातिपदिक रूप में ( २+२०+३+४+ द्वि० २१ ) से सिद्ध होंगे।

## ✓ ङेः स्सिम्मित्थाः[3] ॥ २ ॥

**ङे सप्तम्येकवचनस्य सर्वादिपरस्थितस्य स्थाने स्सि, म्मि, त्थ इत्येत आदेशा भवन्ति। सव्वस्सिं, सव्वम्मि, सव्वत्थ ( पूर्ववत् रलोपो वद्वित्व च, शे० स्प० )। इअरस्सि, इअरम्मि, इअरत्थ ( २-२ तलोप, शे० स्प० )। सर्वस्मिन्, इतरस्मिन् ॥ २ ॥**

ङे स्सिम्मित्था —सर्वादे परस्य ङिप्रत्ययस्य स्सिं-म्मि-त्थ इत्येते त्रय आदेशा भवन्ति। सव्वस्सिं, सव्वम्मि, सव्वत्थ। एव-जस्सिं, जम्मि, जत्थ। तस्सिं, तम्मि, तत्थ। ङौ स्मिन्प्रयोगे स्सि, म्मि प्रयोज्यौ। त्रलि-यत्र तत्रादिषु त्थ इति। यत्र=जत्थ, तत्र=तत्थ। इति विवेक ॥ २ ॥

ङेरिति। सर्वादिक से पर ङिप्रत्यय को स्सि, म्मि, त्थ ये तीन आदेश होते हैं। सर्वस्मिन् में सव्वस्सिं, सव्वम्मि, सव्वत्थ। इसी प्रकार सभी सर्वादिकों में जानना।

---

१ अकारान्ताद्भवति। तथा च हेम —अत सर्वादेर्डे जस ।८।३।५८। अत किम्? सव्वाओ रिद्धीओ इति। २ भामहे तु सूत्रद्वयमिद मिलित्वा सूत्रमेक दृश्यते। ३ ङे स्सि-म्मि-त्था, ङे स्स। का० पा०।

परतु ङि को स्सिं, म्मि होंगे। जैसे यस्मिन् में जस्सि, जम्मि होंगे और त्रल् के विषय में त्थ होगा। जैसे सर्वत्र का सव्वत्थ। यत्र का जत्थ इत्यादि ॥ २ ॥

## इदमेतत्कियत्तद्भ्यष्टा इणा वा ॥ ३ ॥

**इदम्, एतद्, किम्, यद्, तद् इत्येतेभ्य टा इत्यस्य इणादेशो भवति वा। इमिणा (६-१४ इदम् = इम, ४-१ अलोप, शे० स्प०)। एदिणा (४-६ दलोप, १२-३ त् = द्, ४-१ अलोप)। किणा (६-१३ किम्= क, ४-१ अलोप)। जिणा, तिणा (२-३१ य् = ज्, ४-६ दलोप)। पक्षे- इमेण, एदेण, केण, जेण, तेण। (६-१४ इदम् = इद, ५-४ सूत्रोदाहृत- (वच्छेण)वददन्तकार्य्याणि पक्षान्तरे ज्ञेयानि)। एवमुत्तरत्रापि। अनेन, एतेन, केन, येन, तेन ॥ ३ ॥**

इदमेतत्कियत्तद्भ्यष्टा इणा वा—एभ्य परस्य टा-इत्यस्य इणा वा स्यात्। इमिणा, इमेण। एदिणा, एदेण। विकल्पेन 'कगचजे'ति लोप इत्येके। तत-एइणा, एएण। किणा, केण। जिणा, जेण। तिणा, तेण ॥ ३ ॥

इदमिति। इदम् एतद्-किम्-यद्-तद् इन शब्दों से पर टा को इणा आदेश विकल्प से हो। इससे इणा आदेश। 'अन्त्यस्य हल' से हल्-लोप। 'क्वचिदपि लोप' से अलोप। इमिणा। पक्ष में 'टामोर्ण'। 'ए च सुप्यङिङसो'। इमेण। एतद्-शब्द में (२४ से) त को द। एदिणा, एदेण। यदि (१ से) तलोप कर देंगे तो एइणा, एण्णा होंगे। एव किम्, यद्, तद् के जानना ॥ ३ ॥

## आम एसिं ॥ ४ ॥

**इदमादिभ्य उत्तरस्य आम एसिं इत्ययमादेशो वा भवति। इमेसिं (पूर्ववददन्तत्वं, ४-१ अलोप, शे० स्प०)। इमाण (५-४ आम = ण, ५-११ दीर्घ, शे० स्प०)। एदेसिं (४-६ दलोप, एत इति जाते १२-३ त् = द्, शे० स्प०)। एदाण (५-४ आम् = ण, ५-११ दीर्घ)। केसिं (६-१३ किम् = क, ४-१ अलोप, शे० स्प०)। काण (५-४ आम् = ण, ५-११ दीर्घ)। जेसिं (२-३१ य-ज, ४-६ दलोप, ४-१ अलोप, शे० स्प०)। जाण (५-४ आम् = ण, ५-११ दीर्घ)। तेसिं (पूर्ववददन्तत्वमकारलोपश्च, शे० स्प०)। ताण[1] (५-४ आम्=ण, ५-११ दीर्घ०, शे० पू०)। एषाम्-आसाम्। एतेषाम्-एतासाम्, केषाम्-कासाम्, येषाम्-यासाम्, तेषाम्-तासाम् ॥ ४ ॥**

आम एसिं—इदमादिभ्य परस्य आम इत्यस्य एसिं वा स्यात्। इमेसिं, इमाण। एदेसिं, एदाण। केसिं, काण। जेसिं, जाण। तेसिं, ताण ॥ ४ ॥

---

१ स्त्रीलिङ्गेऽप्येतानि रूपाणि। इमासि। एदासि। कासि। जासि। तासि। तथा च वाल्मीकि-कियत्तदोऽस्वमामि सुपि० ७-७-३० सु, अम्, आम्-वर्जिते सुपि परे कियत्तद्भ्यो ङीब् वा स्यात्। पक्षे यद्। तेनैतानि रूपाणि सिद्ध्यन्ति। वा०।

आम इति। इदमादिक से पर आम को एसिं आदेश विकल्प से हो। पूर्व की तरह लोप। इमेसिं। पक्ष में-'टामोर्ण' से ण, 'जस्ङस्यांसु' से दीर्घ। इमाण। इसी प्रकार एतद् किम्, यद्, तद् के रूप सिद्ध होंगे ॥ ४ ॥

## किंयत्तद्भ्यो ङस आसः ॥ ५ ॥

**किम्, यद्, तद्, एभ्य उत्तरस्य ङस आस इत्ययमादेशो भवति वा। कास, कस्स। जास, जस्स। तास, तस्स[1]। (५-८ स्स,एवमुत्तर त्रापि, अदन्तत्वमकारलोपादिकं च पूर्ववत्कार्यम्) ॥ ५ ॥**

किंयत्तद्भ्यो ङस आस[2]—एभ्य परस्य ङस इत्यस्य आस इति वा स्यात्। कास, कस्स। जास, जस्स। तास, तस्स ॥ ५ ॥

किम्-इति। किमादिक से पर ङस् को आस हो। कास, पक्ष में-कस्स। यद् का जास। 'अन्त्यस्य हल' से हल्-लोप। 'क्वचिदपि०' से अल्लोप। पक्ष में-जस्स। तद् का तास, तस्स ॥ ५ ॥

## ईद्भ्यः स्सासे[3] ॥ ६ ॥

**ईकारान्तेभ्य किमादिभ्य उत्तरस्य ङस स्सा से इत्येतावादेशौ भवत। किस्सा, कीसे, कीआ, कीए, कीअ, कीइ। जिस्सा, जीसे, जीआ, जीए, जीअ, जीइ। तिस्सा, तीसे, तीआ, तीए, तीअ, तीइ। (स्त्रिया ४-६ किम्=क, स्त्रीप्रत्यये आपि जाते, ५-२४ बाहुलकात् आत्वे ईत्वे च कृते, ङस स्सा, संयोगे ह्रस्व, एवमेव यत्तद्भ्यामपि, पक्षे-५-२२ सूत्रेण ङस स्थाने इदादयो यथायथ प्रत्येकं योज्या)। कस्या, यस्या, तस्या ॥ ६ ॥**

ईद्भ्य स्सासे—ईप्रत्ययान्तेभ्य किंयत्तद्भ्य परस्य ङस स्सा-से इत्यादेशौ वा स्त। किस्सा, कीसे। 'आदीतौ बहुल'मिति ईप्रत्यय। पक्षे-कीइ, कीए, कीअ, कीआ। एव यत्तदोरपि। जिस्सा, जीसे। जीइ, जीए, जीअ, जीआ। तिस्सा, तीसे। तीइ, तीए, तीअ, तीआ। आकारान्तेभ्य-'किंयत्तद्भ्यो भवत्याद्भ्य स[4] इत्येव तु वा ङस।' कास, काइ, काए। जास, जाइ, जाए। तास, ताइ, ताए ॥ ६ ॥

ईद्भ्य इति। ईप्रत्ययान्त किं-यत्-तत् शब्दों से पर जो ङस् है, उसको स्सा से विकल्प से आदेश हों। 'आदीतौ बहुलम्' से ईप्रत्यय, स्सादेश में (द्वि० ३ 'इदीत पानी०' से) इकार। किस्सा, कीसे। पक्ष में-कीइ, कीए इत्यादि पूर्वप्रक्रिया। इसी प्रकार यद् तद् के जानना। 'आद्भ्य =आकारान्तेभ्य' आकारान्त किं-यद्-तद् शब्द से स आदेश ङस् को विकल्प से हो। कास, जास, तास इत्यादि। पक्ष में-

---

१ किंयत्तदोऽस्यमामि ८।३।३३-सिम्-अम्-आम्-वर्जिते स्यादौ परे एभ्य स्त्रियां ङीर्वा भवति। हे०। २ आस-इति भामहानुसारी पाठ। ३ ङस स्सा सो स्त्रियाम्। इकारान्तेभ्यश्चाकारान्तेभ्यश्च स्त्रियां किमादिभ्य उत्तरस्य ङस स्सा सो इत्यादि। ङसग्रहणेन ङसि-ङि-ग्रहणम्। का० अ० पा०। ४ 'स इ ए वा ङसस्तथा'-इति सुबोधिनीस्थ पाठ।

'नातोऽदातौ' के निषेध से आ और अ नहीं होगा, किंतु इ-ए होगा। अत काइ, काए। कोई आचार्य, स इ ए तीन आदेश मानते हैं, परन्तु उनके मत से पक्ष में क्या होगा ? यह चिन्त्य है ॥ ६ ॥

## ङेर्हिं ॥ ७ ॥

**किमादिभ्य उत्तरस्य ङे हिं इत्ययमादेशो भवति वा। कहिं, कस्सिं, कम्मि, कत्थ, । जहिं, जस्सिं, जम्मि, जत्थ। तहिं, तस्सिं, तम्मि, तत्थ ( ६-२ ङि = स्सिं, म्मि, त्थ )। कस्मिन्, यस्मिन्, तस्मिन् ॥ ७ ॥**

ङेर्हिं—किमादिभ्य परस्य ङेरित्यस्य हिं वा स्यात्। कहिं। जहिं। तहिं। पक्षे—कस्सिं, कम्मि, कत्थ। यत्तदोरप्येवम्। 'अन्यशब्दात्परस्यापि हिंकारो ङेर्विकल्प्यते'। अण्णेहिं। पक्षे-अण्णस्सिं, अण्णम्मि, अण्णत्थ ॥ ७ ॥

ङेरिति। किमादिक से पर ङि को हिं आदेश विकल्प से हो। कहिं, जहिं, तहिं। पक्ष में स्सिं-म्मि-त्थ होंगे। कस्सिं, कम्मि, कत्थ। इसी तरह यत् तत् के होंगे। अन्य शब्द से पर ङि को हिं होगा। अण्णेहिं। पक्ष में-अण्णस्सिं-इत्यादि होंगे ॥ ७ ॥

## आहे इआ काले ॥ ८ ॥

**कियत्तद्भ्यो ङे काले आहे, इआ इत्यादेशौ वा भवत । काहे, जाहे, ताहे,। कइआ, जइआ, तइआ ( पूर्ववदन्तत्व, ४-१ अकारलोप , शे० स्प० )। कहिं इत्यादयोऽपि। कदा, यदा, तदा ॥ ८ ॥**

आहे इआ काले—कियत्तद्भ्य परस्य ङिप्रत्ययस्य कालेऽथ आहे, इआ, इत्यादेशौ वा स्त । काहे, कइआ। पक्षे-कहिं, कस्सिं, कम्मि, कत्थ। एव यत्तदोरप्यूह्यम्। 'आला इत्यपि यत्तद्भ्या काले वाच्ये वदन्ति ते'। जाला, ताला। 'काले ङेरेतदस्याहे एकशब्दादिया तु वा।' एत्ताहे। एतस्मिन् काले। पक्षे-यथाप्राप्तम् एतस्सिं इत्यादय । एक्कइआ। पक्षे-एक्कम्मि इत्यादिका। 'आदेश सर्वशब्दस्य काले ङेराइ इष्यते'। सव्वाइ। पक्षे-पूर्ववत ॥ ८ ॥

आहे इति। समय अर्थ में किं-यद्-तद् शब्दों से आहे इआ आदेश विकल्प से होते हैं। काहे, कइआ। पक्ष में-कहिं, कस्सिं, कम्मि, कत्थ। इसी तरह यद् तद्-शब्दों के जानना। यद्-तद्-शब्दों से काल अर्थ में विकल्प से 'आला' प्रत्यय भी होगा। जाला, ताला। काल अर्थ में ङि को एतत् शब्द से आहे और एक शब्द से इया विकल्प से होगा। पूर्ववत् अन्त्यहल् का और 'क्वचिदपि लोप' से अल्लोप होगा। नीडादित्व से तकार-ककार को द्वित्व। एत्ताहे। एक्कइआ। पक्ष में-स्सिं म्मि इत्यादि होंगे। सर्व शब्द से काल अर्थ में ङि को विकल्प से आइ आदेश हो। सव्वाइ। पक्ष में-सव्वम्मि इत्यादि पूर्ववत् ॥ ८ ॥

## त्तो दो ङसेः[1] ॥ ९ ॥

---

१ ङसेर्म्हा ८।३।६६। कियत्तद्भ्य परस्य ङसे स्थाने म्हा इत्यादेशो वा भवति। कम्हा। जम्हा। पक्षे-काओ, जाओ, ताओ। हेमः।

**कियत्तद्भ्यो ङसे त्तो, दो इत्येतावादेशौ भवत । कत्तो, कदो । जत्तो, जदो । तत्तो, तदो । स्पष्टान्येतानि पदानि । ( ६-७ । ६-२ ) सूत्र विहिता प्रत्यया अपि काले प्रयोक्तव्या , यथा=कस्मिन् काले कदा, कहिं, कस्सि-इत्यादि ज्ञेयम् ॥ ९ ॥**

ओत्तोदो ङसेरनिदम[1]—इदम् शब्दरहितात्सर्वादे परस्य ङसिप्रत्यय ओ त्तो दो इति त्रय आदेशा भवन्ति । 'ङसेरादोदुहय' इत्यस्यापवाद । सव्वओ, सव्वत्तो, सव्वदो । अण्णओ, अण्णत्तो, अण्णदो । तओ, तत्तो, तदो । अनिदम इति किम् ? इमाओ, इमाउ, इमाहि । अस्मादित्यर्थ । 'सर्वादिष्विदमो दीर्घा नत्वन्येषा ङसौ भवेत्' । इमाहिन्तो । 'ङसेरत परस्येह हिन्तो इत्यपि दृश्यते' । इति ङसेर्हिन्तो आदेश । 'तो इत्यपि तद प्राहुरादेश ङसिना सह' । तो । तस्मादिति ॥ ६ ॥

ओ त्तो दो-इति । इदम् शब्द से रहित अन्य सर्वादिक से पर ङसिप्रत्यय को ओ-त्तो-दो ये तीन आदेश हों । 'ङसेरादोदुहय' का बाधक है । सर्व शब्द का सव्वओ, सव्वत्तो, सव्वदो । इसी प्रकार अन्य-शब्द का भी । अण्णओ, अण्णत्तो, अण्णदो । तत् का तओ, तत्तो, तदो । इदम्शब्द को ये आदेश नहीं होंगे किन्तु 'ङसेरादो०' से ओ उ हि ये होंगे । इमाओ, इमाउ, इमाहि । 'सर्वादिगण में ङसि के परे इदम्शब्द को दीर्घ हो और सर्वादि को नहीं । इमाहिन्तो । अकारान्त इदम्-शब्द से पर ङसि को हिन्तो आदेश हो । इससे हिन्तो आदेश । पूर्वोक्त से दीर्घ । ङसि-प्रत्ययसहित तद्-शब्द को 'तो' आदेश हो । तो । तस्मात् का तो हो गया ॥ ९ ॥

## तद ओश्च ॥ १० ॥

**तद उत्तरस्य ङसेरोकारादेशो भवति वा । तो ( अदन्तत्वे त इति जाते, ४-१ अलोप , ततो ङसे ओत्वे ) तो । तत्तो, तदो ( ६-९ ङसे त्तो, दो ) ॥ १० ॥**

## ङसा से ॥ ११ ॥

**वेति वर्तते । तदो ङसा सह से इत्ययमादेशो भवति । पक्षे यथा-प्राप्तम् । से[2] ( स्प० ) । तास ( ६-५ ङस आसादेश , ४-१ त इत्यस्याकारलोप. ) ॥ ११ ॥**

तदो ङसा से वा स्त्रियामपि[3]—अपि शब्दात्पुनपुसकयो परिग्रह । ङसा सह तच्छब्दस्य से वा स्यात् । से । तस्य, तस्या वा । पक्षे-तस्स, ताइ, तीए-इत्यादय । 'एतदोऽपि ङसा से वा त्रिलिङ्गयामिष्यते बुधै' । से । पक्षे-एअस्स । एआइ ॥ १०-११ ॥

तदो इति । तीनों लिङ्गों में ङस्-प्रत्ययसहित तत्-शब्द को से आदेश विकल्प

---

१ सजीवनीस्थ पाठ एष । २ तस्य तस्या । स्त्रियामपि से, तिस्सा । ङस्ग्रहणे ङसिग्रहण-से, तत्तो । का० पा० । ३ सजीव यादिसमत पाठ । भामहे तु तत्र सूत्रद्वयम् ।

से हो। तस्य तस्या को 'से' हो गया। से मुह। तस्य, तस्या वा मुखम्। पक्ष में-तस्स। स्त्रीलिङ्ग में ताइ, तीए इत्यादि होंगे। ङस् के सहित एतत्-शब्द को भी तीनों लिङ्गों में 'से' आदेश हो। एतस्य, एतस्या को 'से' होगा। पक्ष में-एअस्स, एआइ। इत्यादि॥ १०-११॥

## आमा सिं[1] ॥ १२ ॥

**तद् आमा सह सिं इत्ययमादेशो वा भवति। सिं (स्प०)। ताण[2] (६-४ सू० स्प०)। तेषाम्, तासाम्॥ १२॥**

आम सिं[3]—आम्-प्रत्ययेन सह तच्छब्दस्य सिं वा स्यात् स्त्रिया पुंनपुंसकयोश्च। सिं। पक्षे-ताण। 'अमृटाभिस्सु तद स्थाने ण इत्येष स्त्रियामपि'। ण तम्। णेण। णेहि। 'स्त्रियामपि सहैवामा स्याच्च सि इदमोऽपि वा'। सि। आसाम्, एषां वा॥ १२॥

आम इति। आम्-प्रत्यय के सहित तद् को सि आदेश विकल्प से हो। सिं। पक्ष में-ताण। तेषा, तासाम् का रूप सिं यह होगा। सिं-तासामित्यर्थः। अम्-टा-भिस् में भी विभक्तिसहित तद्शब्द के तीनों लिङ्गों में ण आदेश हो। ण पेच्छ (त पश्य)। णेण-तेन। णेहिं-तै। स्त्रीलिङ्ग में आम् के सहित इदम्-शब्द को विकल्प से सि हो। सि। पक्ष में यथाप्राप्त। एषाम्, आसा वा॥ १२॥

## ✓ किमः कः[4] ॥ १३ ॥

**किंशब्दस्य सुपि परत क इत्ययमादेशो भवति। को (४-१ अलोप, ५-१ ओ)। के (४-१ अलोप, ३-१ एत्वम्)। केण (५-१२ एत्व, ५-४ टा=ण)। केहिं (५-१२ ए, ५-५ भिस्=हिं)। क, के, केन, कै॥ १३॥**

किम क—सुपि परे किम क स्यात्। को, के। स्त्रियाम्-काइ, कीए। कया, कस्या, कस्यामित्यर्थे। 'नपुंसके स्वमो कत्व न किम स्यादलुप्तयो'। किं, काइ इत्यादि॥ १३॥

किम इति। सुप् के परे किम् को क आदेश हो। को, के। सर्व्वशब्द के समान रूप हैं 'नपुंसकलिङ्ग में किम्-शब्द को सु, अम् के परे क आदेश न हो और सु अम् का लोप न हो'। कि। काइ। स्त्रीलिङ्ग में काइ, कीए॥ १३॥

## ✓ इदम इमः ॥ १४ ॥

**सुपि परत इदम इम इत्ययमादेशो भवति। इमो (४-१ अलोपे, ५-१ ओ)। इमे (६-१ जस्=ए, शे० पू०)। इम (५-३ अमोऽकार लोपः, ४-१२ बिं, शे० स्प०)। इमेण (४-१२ अ=ए, ५-४ टा=ण)। इमेहिं (५-५ भिस्=हिं, शे० पू०)॥ १४॥**

---

१ वेद तदेतदो ङसाम्भ्यां से-सिमौ ८।४।८१। इति हेमस्तु इतमेतदोरपीच्छति।
२ ताण। स्सिनाणा। सिंताण, तेसिं। हेमच० सिं इत्येव। का० पा०। ३ सञ्जीवनीस्थ पाठ।
४ किम किम् ८।३।८० किम क्लीबे वर्तमानस्य स्यम्भ्या सह कि भवति। किं कुल तुह। हेम।

इदम इम —सौ परत इदम इम स्यात् । इमो । स्त्रियाम्-इमा । 'आदेशा विदमश्चान्यौ सौ पुंस्यअमित्र स्त्रियाम्' । अअ । स्त्रियाम्-इअ ॥ १४ ॥

इदम इति । इदम्-शब्द को इम आदेश हो । इमो, इमे । सर्वशब्द की तरह जानना । इदम्-शब्द को सु के परे पुलिङ्ग में अअ आदेश हो और स्त्रीलिङ्ग मे इअ आदेश हो । अअ रामो । स्त्रीलिङ्ग मे-इअ कला = इय कला ॥ १४ ॥

## स्सस्सिमोरद्वा ॥ १५ ॥

**स्स-स्सिमो परत इदमोऽदादेशो वा भवति । अस्स । इमस्स । (५-८ ङस्=स्स, शे० स्प०) । अस्सि । इमस्सि (६-२ स्सि, शे० स्प०) ॥ १५ ॥**

अ स्सिस्सयोर्वा[१]—ङिङसादेशयो स्सिस्सयो परयोरिदम अ इति वा स्यात् । अस्सि, इमस्सिं । इमम्मि, इमत्थ-इत्याद्यपि । अस्स, इमस्स । 'स्यात्प्रत्यया तरेऽप्यत्व स्त्रियामन्यत्र चेदम' । एहि, इमेहि । एसु, इमेसु । स्त्रियाम्-आहिं, इमाहिं । आसु, इमासु । 'इदमोऽत्व स्त्रियामात्व सह स्सा च ङसस्तु वा' । अस्सा । पक्षे-इमाइ, इमाए ॥ १५ ॥

अ स्सि-इति । ङि-ङस्प्रत्यय के आदेश स्सि और स्स के परे 'अ' आदेश विकल्प से हो । अस्सि, पक्ष मे-इमस्सि । इमम्मि, इमत्थ-इत्यादि भी होंगे । षष्ठी मे अस्स, इमस्स । स्त्रीलिङ्ग से अन्य प्रत्यय के परे अर्थात् षष्ठी सप्तमी के बिना इदम्-शब्द को विकल्प से अकार हो । 'ए सुप्य०' से एकार, एहि, इमेहि । एसु, इमेसु । स्त्रीलिङ्ग में आहि, इमाहि । आसु, इमासु । इदम्-शब्द के अकार को आकार हो और वहीं ङस् को विकल्प से 'स्सा' आदेश हो । अस्सा । पक्ष में-इमाइ, इमाए (५+२२) से इकार, एकार ॥ १५ ॥

## ङेर्देन हः ॥ १६ ॥

**इदमा दकारेण सह ङे स्थाने हकारादेशो वा भवति । इह (स्प०) । पक्षे-अस्सिं, इमस्सिं, इमस्मि (पूर्ववद्) ॥ १६ ॥**

ङेर्मेन ह[२]—इदमो मकारेण सह ङिप्रत्ययस्य ह इत्यादेश स्यात् । इह । पक्षे-अस्सिं, इमस्सिं, इमम्मि ॥ १६ ॥

ङेरिति । इदम्-शब्द के मकार के सहित ङिप्रत्यय को 'ह' आदेश हो । इह । पक्ष में-अस्सि, इमस्सिं, इमम्मि ॥ १६ ॥

## न त्थः ॥ १७ ॥

**इदम परस्य ङे त्थ इत्ययमादेशो न भवति । 'ङे स्सिम्मित्था' इति प्राप्ते प्रतिषिध्यते । इह, अस्सि, इमस्सि, इमस्मि, (शे० ६-१६ सू० द्रष्टव्यानि) ॥ १७ ॥**

न त्थ —इदम परस्य ङे त्थ आदेशो न स्यात् । इमस्सि, इमम्मि-इत्येव ॥ १७ ॥

न त्थ । इदम् शब्द से पर ङि को त्थ आदेश न हो । तो इमस्सिं, इमम्मि ही होंगे ॥

१ सजीवनीसमत पाठ । २ सजीवन्यादिस्थ पाठ ।

## नपुंसके स्वमोरिदमिणमिणमो ॥ १८ ॥

**नपुंसकलिङ्गे इदम स्वमो परत सविभक्तिकस्य इद, इण, इदमो इत्येते त्रय आदेशा भवन्ति । इद, इण, इणमो धण (स्पष्टानि) । इद धनम् ॥१८॥**

नपुसके स्वमोरिदमिणमिणमो—नपुसके स्थितस्य इदमूशब्दस्य स्वमो परयो इद, इण, इणमो इति त्रय आदेशा भवन्ति । इद वण । एवम्-इण, इणमो वण । 'नपुसक इमश्च स्यात् चतुर्थ इदम स्वमो' । इम वण ॥ १८ ॥

नपुसेति । नपुसकलिङ्ग में सु अम् के परे इदम्-शब्द को इद-इम-इणमो ये तीन आदेश हों । इद वण । एवम्-इण, इणमो भी होगा । इदम् को नपुसकलिङ्ग में सु अम् के परे 'इम' आदेश भी होगा । इम वण ॥ १८ ॥

## एतदः सावोत्वं वा ॥ १९ ॥

**एतच्छब्दस्य सौ परत ओत्व वा भवति । नित्ये प्राप्ते विकल्प्यते । एस । एसो ( ४-६ दलोप , ६-२२ त् = स् ) एष ॥ १९ ॥**

एतद सोरोत्व वा—एतच्छब्दात्परस्य सुप्रत्ययस्य ओत्व वा स्यात् । एसो । पक्षे-एस ॥ १९ ॥

एतद इति । एतद्-शब्द के सुप्रत्यय को ओकार विकल्प से होगा । एसो पुरिसो । पक्ष में-एस, होगा ॥ १९ ॥

## त्तो ङसेः ॥ २० ॥

**एतद परस्य ङसे त्तो इत्ययमादेशो भवति । एत्तो ( संस्कृतानुसारं, ४-६ सूत्राद्वा दलोपे, एत इति जाते, ६-२० ङसि = त्तो, ६-२१ तलोप ) । एदादो, एदादु, एदाहि ( ४-६ दलोप , १२-३ त् = द्, ५-११ दीर्घ , ५-६ ङसि = दो, दु, हि ) । एतस्मात् ॥ २० ॥**

त्तो ङसे —'ओत्तोदो' इति सिद्धत्वान्नियमार्थम् । एतच्छब्दात्परस्य ङसे त्तो इत्येवादेश स्यात् । एत्तो । सामान्यतस्तु प्राप्ता न बाध्यन्ते । तेन एसा, एसाओ, एआउ, एआहि, एआहिन्तो भवन्त्येव ॥ २० ॥

त्तो इति । 'ओत्तोदो' से त्तो आदेश सिद्ध था फिर 'त्तो' आदेश नियम करता है कि एतद्-शब्द से पर ङसिप्रत्यय को 'त्तो' यही आदेश हो । अत 'ओ दो' ये दो आदेश नहीं होंगे । एत्तो । यह साथ में पठितों का ही निषेध करेगा, अत सामान्यत प्राप्त 'ङसेरादो०' ( ५+६ ) से आकारादि होंगे । एसा-एसाओ-एआउ-एआहि-एआहिन्तो-इनका बाध नहीं करेगा ॥ २० ॥

## त्तोत्थयोस्तलोपः ॥ २१ ॥

**एतदस्तकारस्य त्तोत्थयोः परतो लोपो भवति । एत्तो । एत्थ ( ६-२ ङि = त्थ, अन्यत् पू० ) । एतस्मिन् ॥ २१ ॥**

---

१ मञ्जीवन्यनुसारी पाठ । २ तो—एतो का० पा० ।

त्तत्थयोस्तस्य लोपः[1]—त्तोत्थयो परयोरेतदस्तकारस्य लोप स्यात् । एत्तो । एत्थ ॥
त्तत्थयोरिति । त्तोत्थ के परे एतद-शब्द के तकार का लोप हो । एत्तो, एतस्मात् । एत्थ, एतस्मिन् ॥ २१ ॥

## तदेतदोः सः सावनपुंसके ॥ २२ ॥

**तच्छब्दस्य एतच्छब्दस्य च यस्तकारस्तस्य सकारादेशो भवति, अनपुंसके सौ परत । सो पुरिसो । सो महिला[2] । एस, एसो । एसा (४-६ दलोपे, ६-१९ ओत्वविकल्प, स्त्रीत्वे-५-२४ आत्व, महिला शब्दस्तत्सम ) । साविति किम् ? एदे । ते ( ४-६ दलोप , १२-३ त=द, ६-१ जस्=ए) एते । ते । एद । त ( ४-६ दलोप , ५-३ अमोऽकारलोप , ४-१२ बिं० ) । एतम् , एनम् । तम् । अनपुसक इति किम् ? त एद धण ( नपुसकत्वान्न तकारस्य सकार, ५-३० सोर्बिन्दु , पूर्ववदन्यत् ) तदेतद्धनम् ॥ २२ ॥**

तदेतदो स सावनपुसके—तदेतच्छब्दयोस्तकारस्य अनपुसकलिङ्गे सौ परे सकार स्यात् । सो । एसो । स्त्रियाम्-सा, एसा । 'एस इत्येव सावाहु स्त्रियामप्येतद परे' । एस कला ॥ २२ ॥

तदे-इति । नपुसकलिङ्ग के अतिरिक्त अर्थात् पुलिङ्ग और स्त्रीलिङ्ग में सु के परे तद्-एतद्-शब्द के तकार को सकार हो । सो एसो देवो । स्त्रीलिङ्ग में । सा, एसा । कोई आचार्य एतद्-शब्द का स्त्रीलिङ्ग मे भी 'एस' यही कहते हैं । एस कला । इति ॥

## अदसो दो मुः ॥ २३ ॥

**अदसो दकारस्य सुपि परतो मु इत्ययमादेशो भवति । अमू पुरिसो । अमू महिला[3] (४-६ सलोपे, अमु जाते, ५-१८ दीर्घ , ४-६ सोर्लोप ) । अमूओ पुरिसा । अमूओ महिलाओ[4] (५-१६ जस्=ओ, स्त्रियाम् ५-२० जस ओत्वं, पूर्ववत् दीर्घादि ) । अमुं वणं, अमूइ वणाइ ( ५-३ अमोऽकारस्य लोप , ४-१२ बिं०, ५-२६ जस् = इ, पूर्वस्य दीर्घ ) । अदो वनम् । अमूनि वनानि ॥ २३ ॥**

अदसो दो मु —अदस् शब्दसम्बन्धिनो दकारस्य मु इत्ययमादेश स्यात् । अमू । अमूओ । अमूइ । अमी, अमू , अमूनि ॥ २३ ॥

अदस इति । अदस्-शब्द के दकार को 'मु' आदेश हो । अमू । भानुशब्द की तरह, जस् का लोप, दीर्घ । अमू-देवा । स्त्रीलिङ्ग में 'जसो वा' से ओकार । अमूओ । नपुसकलिङ्ग में 'इ जस्-शसोर्दीर्घश्च' से इकार, दीर्घ । अमूइ । इत्यादि ॥ २३ ॥

---

१ सजीवन्यादिसमत पाठ । २ स पुरुष । सा महिला । ३. असौ पुरुष. । असौ महिला । ४ अमी पुरुषा । अमूर्महिला ।

## हश्च सौ[1] ॥ २४ ॥

अदसो दकारस्य सौ परतो हकारादेशो भवति। अह पुरिसो। अह महिला। अह वण[2]। (४-६ अदस सलोप)। हादेशोऽयमोत्वात्वबिन्दून् त्रिष्वपि लिङ्गेषु परत्वाद् बाधते ॥ २४ ॥

हश्च सौ—अदसो दकारस्य सौ परे वा हकार स्यात्। पक्षे यथाप्राप्तम्। अह पुरिसो। पक्षे-अमू। स्त्रियाम्-अह, अमू। नपुसके-अह, अमु ॥ २४ ॥

हश्चेति। अदस् शब्द के दकार को विकल्प से हकार हो सु के परे। पक्ष में यथा-प्राप्त। अह पुरिसो। पक्ष में-अमू। स्त्रीलिङ्ग में अह, अमू। नपुसक लिङ्ग में अह, अमु॥

## पदस्य ॥ २५ ॥

अधिकारोऽयम् आशब्दविधानात्[3]। यदित ऊर्ध्वमनुक्रमिष्याम, पदस्य तद्भवतीत्येवं वेदितव्यम्। तच्च[4] तत्रैवोदाहरिष्याम ॥ २५ ॥

पदस्य—अधिकारोऽयम्। 'ह्वेदों' इत्यत प्राक् यत्कार्यं तत्सुब तस्य पदस्य स्थाने भविष्यतीत्यधिकृत वेदितव्यम् ॥ २५ ॥

पदस्येति। 'पदस्य' यह अधिकार सूत्र है, 'ह्वेदों' इस सूत्र पर्यन्त जितने कार्य होंगे, वे सिद्ध पद को होंगे ॥ २५ ॥

## युष्मदस्तं तुमं[5] ॥ २६ ॥

सावित्येव। युष्मद पदस्य सौ[6] परत. तं तुमं इत्येतावादेशौ भवत। तं आगदो। तुमं आगदो[7] (आङ्पूर्वकक्तान्तस्य गमे. १२-३ त् = द्, शौरसेन्यां २-२ सूत्रबाधेन न लोप, ५-१ ओ) ॥ २६ ॥

युष्मदस्त तुम—सुप्रत्यये सिद्धस्य युष्मद त्वमित्यस्य स्थाने त तुम इत्यादेशौ भवत। त, तुम ॥ २६ ॥

युष्मेति। सुप्रत्यय के परे सिद्ध युष्मद्-शब्द को अर्थात् त्व को 'त, तुम' ये दो आदेश हों। त आगओ, तुम आगओ। त्वम् आगत ॥ २६ ॥

## तुं चामि ॥ २७ ॥

युष्मद. पदस्य अमि परतः तुं इत्यादेशो वा भवति, तुमं च। तुं

---

१ म्मावयेऔ वा ८।३।८९। अदसोऽन्त्यव्यञ्जनलुकि दकारान्तस्य स्थाने ङ्यादेशे म्मौ परत अय-इअ इत्यादेशौ वा भवत। अयम्मि, इअम्मि। पक्षे-अमुम्मि। हे०। अमुष्मिन्। अन्यत्र ६।२२ मुक्तते यथाप्राप्त विभक्त्यादेशा। २ असौ पुरुष। असौ महिला। अदो वनम्। ३ 'ह्वेदों' ५४ सूत्रात्प्रागित्यर्थ। तदुक्तम्—'पदस्येत्यधिकारोऽय द्विशब्दस्य विधेरध'। ४ तत्र तत्र विधिसूत्रेषूदाहरणानि द्रष्टव्यानीत्यर्थ। ५ युष्मदस्त, तु, तुव, तुह, तुम सिना ८।३।९० । सिना सह एते पञ्च आदेशा भवन्ति। हे०। ६ 'सौ' इति सप्तम्यन्तनिर्देशस्तु विषयविभागार्थम्। एवमुत्तरत्रापि। ७ त्वम् आगत।

पेक्खामि, तुमं पेक्खामि[1] ( १२-१ दृश् = पेक्ख, ७-३० आत्वम् ) ॥२७॥

तु चामि—अमि परे सिद्धस्य युष्मदस्त्वामित्यस्य तु स्यात् । चकारात् त तुम अपि । तु, त, तुम । 'युष्मदोऽमि पदस्य स्याच्चतुर्थस्तु तुमे इति' । तुमे । त्वामित्यर्थः ॥

तुमिति । अम् के परे सिद्ध युष्मद् को अर्थात् 'त्वाम्' के स्थान पर 'तु' आदेश हो और चकार से त, तुम ये भी होंगे। जणो तु-त-तुम पेच्छइ = जनस्त्वा प्रेक्षते । युष्मद्-शब्द को तीन आदेशों के अतिरिक्त चौथा 'तुमे' आदेश भी होगा अर्थात् बाध्य बाधक भाव नही होगा । तुमे पासइ । त्वा पश्यति ॥ २७ ॥

## तुज्झे तुह्मे जसि ॥ २८ ॥

**युष्मद पदस्य जसि परत तुज्झे, तुह्मे इत्येतावादेशौ भवत । तुज्झे आगदा, तुह्मे आगदा[2] ॥ २८ ॥**

तुज्झे तुज्झ तुम्हे जसि[3]—जसि यूयमित्यस्य उक्तास्त्रय आदेशा भवन्ति । तुज्झे, तुज्झ, तुम्हे पडिआ । 'तज्झे तव्वे तम्हे चैव त्रयोऽन्ये युष्मदो ङसि' । तज्झे, तव्वे, तम्हे गुरू ॥ २८ ॥

तुज्झे इति । युष्मद्-शब्द के जस के परे सिद्ध 'यूयम्' इसको तुज्झे, तुज्झ, तुम्हे ये तीन आदेश हों । 'तुज्झे पडिआ' = यूय पण्डिता । युष्मद् को ङस् के परे सिद्ध तव को तज्झे, तव्वे, तम्हे ये आदेश हों । तज्झे गुरु = तव गुरु ॥ २८ ॥

## वो च शसि ॥ २६ ॥

**शसि युष्मद पदस्य वो इत्यादेशो भवति, चकारात् तुज्झे तुह्मे च । वो पेक्खामि । तुज्झे, तुह्मे पेक्खामि[4] (पेक्खामि ६-२७ सू० स्प०) ॥ २९ ॥**

वो च शसि—शसि युष्मानित्यस्य वो स्यात् । चकारात् पूर्वोक्ता षडपि । वो, तुज्झे, तुज्झ, तुम्हे, तज्झे, तव्वे, तम्हे कहेइ । युष्मान् कथयति ॥ २९ ॥

वो च इति । शस् के परे सिद्ध युष्मान् को 'वो' आदेश हो । चकार से पूर्वोक्त भी छ आदेश होंगे । तम्हे कहेइ । युष्मान् कथयति ॥ २९ ॥

## टाङ्योस्तइ तए तुमए तुमे ॥ ३० ॥

**युष्मदुत्तरयो टा, ङि-इत्येतयो तइ, तए, तुमए, तुमे इत्येत आदेशा भवन्ति । टा-तइ, तए, तुमए, तुमे कअं[5] । ङि-तइ, तए, तुमए, तुमे ठिअं[6] । पूर्ववत् स्पष्टानि ॥ ३० ॥**

टाङ्योस्तइ तए तुमइ तुमए तुमे[7]—टाप्रत्यये ङौ च सिद्धयोस्त्वया-त्वयी त्येतयो तइ, तए, तुमइ, तुमए, तुमे इति पञ्च आदेशा भवन्ति । तइ, तए, तुमइ, तुमए, तुमे जुज्झइ । त्वया, त्वयि च युज्यते ॥ ३० ॥

टाङ्यो-इति । टा के परे सिद्ध त्वया और ङि के परे सिद्ध त्वयि को तइ-तए

---

१ त्वां पश्यामि । २ यूयम् आगता । ३ एष पाठ सजीवनीसमत । ४ युष्मान् पश्यामि । ५ त्वया कृतम् । ६ त्वयि स्थितम् । ७ सजीव यनुसारी पाठ एष ।

इत्यादि पाँच आदेश होते हैं। त्वया में भी पाँचों और त्वयि में भी पाँचों होंगे ॥ ३० ॥

## ङसि तुमो तुह तुज्झ तुह्म तुम्माः ॥ ३१ ॥

**युष्मद पदस्य ङसि तुमो, तुह, तुज्झ, तुह्म, तुम्म इत्येत आदेशा भवन्ति। तुमो पदं। तुह, तुज्झ, तुह्म, तुम्म पदं[१] ॥ ३१ ॥**

**ङसि तुमो-तुह तुज्झ तुव तुम्हा[२]**—ङसि सिद्धस्य युष्मद पदस्य तवेत्यस्य पञ्चादेशा स्यु। तुमो धण। तुज्झ पिआ। तव धनम्। तव पिता। इत्यादि।

तज्झ, तम्बे, दिए, तुज्झ, तुमाइ, तु, तुमे, तुमा।
युष्मदो ङसि सिद्धस्य स्युरष्टावपरेऽप्यमी ॥

तज्झेत्याद्यस्य। तव ॥ ३१ ॥

ङसीति। युष्मद्-शब्द का ङस् के परे सिद्ध तव इस पद को तुमो इत्यादि पाँच आदेश हों। उदाहरण स्वय बना लेना। 'ङस् के परे सिद्ध' तव को, तज्झ-तम्बे-दिए इत्यादि आठ आदेश और होंगे। तज्झ-तम्बे-दिए-तुज्झ (इत्यादि) धण। तव धनमिति ॥ ३१ ॥

## आङि च ते दे ॥ ३२ ॥

**आङि तृतीयैकवचने चकाराद् ङसि च परतो युष्मद पदस्य ते, दे इत्येतावादेशौ भवत। ते कअ। दे कअ[३]। ते धणं, दे धण[४] ॥ ३२ ॥**

**आङि च ते दे**—आङि टाप्रत्यये सिद्धस्य त्वयेत्यस्य, ङसि सिद्धस्य तवेत्यस्य च ते, दे इत्यादेशौ भवत। ते, दे किअ। त्वया कृतम्। ते, दे धण। तव धनम् ॥३२॥

आङीति। टाप्रत्यय के परे सिद्ध त्वया इसको तथा ङस् के परे सिद्ध तव इसको ते-दे ये आदेश हों। ते-दे-किअ। त्वया कृतम्। त्वया को ते, दे आदेश हुये। एवम् ते-दे-धण। तव धनम्। तव को ते, दे आदेश हो गये ॥ ३२ ॥

## तुमाइ च ॥ ३३ ॥

**आङि युष्मद पदस्य तुमाइ इत्ययमादेशो भवति। तुमाइ कअं[५] ॥३३॥**

**तुमाइ च**—टाप्रत्यये सिद्धस्य त्वयेत्यस्य तुमाइ इति स्यात्। तुमाइ। 'आहु ए-दि-तु-इत्यन्यानादेशानाङि युष्मद'। ए, दि, तु पढिअ। त्वया पठितम् ॥ ३३ ॥

तुमाइ इति। टाप्रत्यय के परे सिद्ध त्वया इसको तुमाइ आदेश हो। 'युष्मद् शब्द के आङ् अर्थात् टा के परे सिद्ध त्वया इसको ए-दि-तु ये तीन आदेश और हों। तुमाइ ए दि तु पढिअ। त्वया पठितम्। त्वया को उक्त आदेश हुये ॥ ३३ ॥

## तुज्झेहिं तुह्मेहिं तुम्मेहिं भिसि ॥ ३४ ॥

**भिसि परतो युष्मद. पदस्य तुज्झेहिं, तुह्मेहिं, तुम्मेहिं इत्येत आदेशा भवन्ति। तुज्झेहिं, तुह्मेहिं, तुम्मेहिं कअं[६] ॥ ३४ ॥**

---

१ तव पदम्। पदशब्दः स्कृतसमो विकाराभाववान् महिला-शब्दवत् 'तत्समास्ते येषु न विकार' इति प्राकृतव्याकरणनियम। २ संजीवनीसमत पाठ। ३ त्वया कृतम्। ४ तव धनम्। ५ त्वया कृतम्। ६ युष्माभि कृतम्।

तुज्झेहि तुब्भेहि तुम्हेहि भिसि[1]—भिसि सिद्धस्य युष्माभिरित्यस्य त्रय आदेशा भवन्ति । तुज्झेहि, तुब्भेहि, तुम्हेहि । 'तज्झेहि, तब्भेहि, तम्हेहि त्रयोऽन्ये युष्मदो भिसि' । तज्झेहि, तब्भेहि तम्हेहि । युष्माभिरिति ॥ ३४ ॥

तुज्झेहीति । भिस् के परे सिद्ध 'युष्माभि' को तुज्झेहि तुब्भेहि तुम्हेहि ये तीन आदेश होते हैं । युष्माभि को तज्झेहि, तब्भेहि, तम्हेहि, ये तीन आदेश और होंगे । युष्माभिरिति ॥ ३४ ॥

## ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि ॥ ३५ ॥

**ङसौ परतो युष्मद् पदस्य तत्तो, तइत्तो, तुमादो, तुमादु, तुमाहि इत्येत आदेशा भवन्ति । तत्तो आगदो । तइत्तो, तुमादो, तुमादु, तुमाहि आगदो । त्वदागत [2] ॥ ३५ ॥**

ङसौ तत्ता तइत्तो तुमाओ तुमाइ तुमाहि वा[3]—ङसि सिद्धस्य त्वदित्यस्य तत्तो, तइत्तो इत्यादय पञ्च आदेशा स्यु । तत्तो=त्वत् । 'तुम्हाहिन्तो तम्हाहिन्तो तुहिन्तो युष्मदो ङसौ । अमी अपि त्रय प्रोक्ता पृथगादेशपञ्चकात्' ॥ एवम्-अष्ट रूपाणि भवन्ति । तुम्हाहिन्तो, तम्हाहिन्तो तुहिन्तो, तुडिओ । त्वत् त्रुटित ॥ ३५ ॥

ङसाविति । ङसि के परे सिद्ध 'त्वत्' इस पद को तत्तो, तइत्तो, तुमाओ, तुमाइ, तुमाहि ये पाँच आदेश हों । त्वत् इति । युष्मद् के ङसि के परे तुम्हाहिन्तो, तम्हा हिन्तो, तुहिन्तो, ये तीन आदेश और होंगे । इस प्रकार त्वत् के स्थान पर आठ रूप होंगे । तत्तो तुडिओ । त्वत् त्रटित इति ॥ ३५ ॥

## तुह्माहिन्तो तुह्मासुन्तो भ्यसि ॥ ३६ ॥

**युष्मद् पदस्य पञ्चमीबहुवचने भ्यसि तुह्माहितो, तुह्मासुन्तो इत्येतावादेशौ भवत । तुह्माहितो, तुह्मासुन्तो आगदो[4] ॥ ३६ ॥**

तुज्झाहिन्तो तुज्झासुन्तो भ्यसि[5]—पञ्चमीबहुवचने भ्यसि सिद्धस्य युष्मद् इत्यस्य एतावादेशौ स्त । तुज्झाहिन्तो, तुज्झासुन्तो अण्णो देवो । युष्मद् अन्यो देव । तुज्झेहिन्तो, तुम्हेहिन्तो, तुम्हासुन्तो, तुम्हेत्तो, तुम्हाहिन्तो, तुज्झन्तो, तुहेहि, तुम्हेहि, तुज्झेहि, तुब्भासुन्तो इति दशान्ये युष्मदो भ्यसि प्रख्याता ॥ ३६ ॥

तुज्झेति । पञ्चमीबहुवचन भ्यस् के परे सिद्ध 'युष्मद्' को तुज्झाहिन्तो, तुज्झासुन्तो ये आदेश हों । तुज्झाहिन्तो, तुज्झासुन्तो अण्णो देवो । युष्मद् अन्यो देव । युष्मद् शब्द के भ्यस के परे 'युष्मद्' इस सिद्ध पद को, तुज्झेहिन्तो तुम्हेहिन्तो, तुम्हासुन्तो, तुम्हेत्तो, तुम्हाहिन्तो, तुज्झन्तो, तुहेहि, तुम्हेहि, तुज्झेहि, तुब्भासुन्तो ये दश आदेश और होते है । उदाहरण पूर्व के समान कल्पना कर लेना । युष्मद् इति ॥ ३६ ॥

## वो भे तुज्झाणं तुह्माणमामि ॥ ३७ ॥

---

१ सजीवनीसमत पाठ । २ त्वत्-आगत । ३ सजीवनीस्थ पाठ ।
४ युष्मदागत । ५ सजीवनीसमत पाठ ।

आमि परतो युष्मद पदस्य वो, भे, तुज्झाणं, तुह्माण इत्येत आदेशा भवन्ति। वो धणं। भे धणं। तुज्झाणं, तुह्माण धणं[1] ॥ ३७ ॥

वो ते तुज्झाण तुम्हाण आमि[2]—आमि सिद्धस्य युष्माकमत्यस्य एते चत्वार आदेशा स्यु । तुम्हाण, वो, ते, तुज्झाण वा गामो। युष्माक ग्राम । 'तुज्झ, तुब्भ, तुम्म इति त्रयोऽन्ये चापि युष्मद'। युष्माकमित्यस्य एतेऽपि त्रयो भवन्ति ॥ ३७ ॥

वो ते इति। आम् के परे सिद्ध युष्मद्-शब्द के 'युष्माकम्' को वो, ते, तुज्झाण, तुम्हाण ये चार आदेश हों। तुज्झाण गामो। युष्माक ग्राम । अन्य उदाहरण भी ऐसे ही होंगे। युष्माक को तुज्झ, तुब्भ, तुम्ह ये तीन आदेश और होंगे। सब में युष्माकम् यह जानना ॥ ३७ ॥

## ङौ तुमम्मि ॥ ३८ ॥

युष्मद. पदस्य ङौ परत तुमम्मि इत्यादेशो भवति। तुमम्मि ठिअं[3]। पूर्वोक्ताश्च तइ-प्रभृतयश्चत्वारोऽप्यादेशा भवन्ति ॥ ३८ ॥

तुमम्मि च ङौ[4]—ङौ सिद्धस्य त्वयीत्यस्य पदस्य तुमम्मि इत्यादेश स्यात्। तुमम्मि। त्वयि ॥ ३८ ॥

तुमम्मीति। ङि के पर सिद्ध त्वयि को तुमम्मि होगा। स्पष्ट उदाहरण है ॥ ३८ ॥

## तुज्झेसु तुह्मेसु सुपि ॥ ३९ ॥

युष्मद पदस्य सप्तमीबहुवचने तुज्झेसु, तुह्मेसु इत्येतावादेशो भवत । तुज्झेसु ठिअ। तुह्मेसु ठिअ[5] ॥ ३९ ॥

तुज्झेसु तुब्भेसु तुम्हेसु सुपि[6]—सुपि सिद्धस्य युष्मासु इत्यस्य एते त्रय आदेशा स्यु'। तुज्झेसु ठिअ। युष्मासु स्थितम् ॥ ३९ ॥

तुज्झेसु इति। युष्मद्-शब्द के सुप् के परे सिद्ध 'युष्मासु' पद को तुज्झेसु, तुब्भेसु, तुम्हेसु ये तीन आदेश हों। तुज्झेसु ठिअ। युष्मासु स्थितम् ॥ ३९ ॥

## अस्मदो हमहमहअ सौ ॥ ४० ॥

अस्मद. पदस्य सौ परतो हं, अहं, अहअ इत्येत आदेशा भवन्ति। हं, अह, अहअ करेमि[7] (१२-१५ कृञ् = कर, ७-२ मि, ७-३४ एत्वम्) ॥

अस्मदो ह अह अहअ सौ—सुप्रत्यये सिद्धस्य अस्मद अहमित्यस्य ह, अह, अहअ एते त्रय आदेशा भवन्ति। ह जाणामि। अह जानामि ॥ ४० ॥

अस्मदो-इति। सुप्रत्यय के परे सिद्ध-अस्मद्-शब्द के अह पद को ह, अह, अहअ ये तीन आदेश हों। ह जाणामि। अह जानामि ॥ ४० ॥

## अहम्मि रमि च ॥ ४१ ॥

---

१ युष्माक धनम्। २ सजीवनीसंमत पाठ। ३ त्वयि स्थितम्। ४ सजीवनीसमत पाठोऽयम्। क्रमेऽपि भेद। ५ युष्मासु स्थितम्। ६ पाठ सजीवनीस्थ, क्रमस्तु न तथा ७ अह करोमि।

**अमि परतोऽस्मद् पदस्य अहम्मि इत्ययमादेशो भवति, सौ च। अहम्मि पेक्ख। अहम्मि करेमि। मा प्रेक्षस्व। अहं करोमि॥ ४१॥**

अम्मिरमि च[1]—अम्मि सुप्रत्यये च सिद्धस्य अस्मद पदस्य 'माम्, अह' मित्येतयो अम्मि इत्यादेश स्यात्। अम्मि पाससि। मा पश्यसि। अम्मि कहेमि। अह कथयामि। 'सावस्मदो भवत्यत्र 'म्मि' इत्येष च पञ्चम'। म्मि = अहम्॥ ४१॥

अम्मीति। अम् और सुप्रत्यय के परे सिद्ध अस्मद्शब्द के 'माम्' और 'अहम्' को अम्मि आदेश हो। उदाहरण स्पष्ट है। अस्मद्-शब्द के सु के परे सिद्ध 'अह' पद को 'म्मि' आदेश हो। इस प्रकार अह को पाँच आदेश होंगे॥ ४१॥

## मं ममं॥ ४२॥

**अमीति वर्तते। अस्मद् पदस्य अमि परतो म मम-इत्येतावादेशौ भवत। मं, मम पेक्ख[2]॥ ४२॥**

म मम च[3]—अमि सिद्धस्य 'मा'मित्यस्य एतावादेशौ स्त। म, मम = मामित्यर्थ। 'चत्वारोऽन्येऽस्मदोऽमि स्युर्मिम णो अम अम्ह च'। मिम, णो, अम, अम्ह रक्खउ। मा रक्षतु॥ ४२॥

म-इति। अम् के परे सिद्ध 'मा' पद को म, मम ये आदेश हों। अस्मद्-शब्द को अम् के परे और चार मिम, णो, अम, अम्ह आदेश हों। अम्ह रक्खेउ। मा रक्षतु॥४२॥

## अह्मे जश्शसोः॥ ४३॥

**अस्मद् पदस्य जश्शसो परत अह्मे इत्ययमादेशो भवति। अह्मे आगदा[4]। अह्मे पेक्ख[5]॥ ४३॥**

अम्हे जश्शसो—जसि शसि सिद्धस्य अस्मद पदस्य वयमित्यस्य अस्मानित्यस्य च अम्हे इत्यादेशो भवति। अम्हे=वयम्, अस्मानिति वा। 'अम्हो, अम्ह तथैवैतौ जश्शसोरस्मदो मतौ'। अम्हो, अम्ह = वयम्, अस्मानिति वा॥ ४३॥

अम्हे इति। अस्मद्-शब्द के जस् के परे सिद्ध 'वय' पद को और शस् के परे सिद्ध 'अस्मान्' पद को अम्हे आदेश हो। अम्हे। वय के स्थान में और अस्मान् में भी होगा। और वयम्, अस्मान् को अम्हो, अम्ह ये भी होंगे। अम्हो, अम्ह=वयम्, अस्मान् वा। वय को दोनों एवम् अस्मान् को भी दोनों होंगे॥ ४३॥

## णो शसि॥ ४४॥

**अस्मद् पदस्य शसि परतो णो इत्ययमादेशो भवति। णो पेक्ख = अस्मान् प्रेक्षस्व॥ ४४॥**

णो च शसि[6]—शस्प्रत्यये अस्मद पदस्य णो इति स्यात्। णो हसइ = अस्मान् हसति॥ ४४॥

---

१ सञ्जीवनीसमत पाठ। २ मां प्रेक्षस्व। ३ सञ्जीवनीसमत पाठ। ४ वयमागता। ५ अस्मान् प्रेक्षस्व, पश्य वा। ६ सञ्जीवनीसमत पाठ।

णो चेति। शस् के परे सिद्ध अस्मद्-शब्द को अर्थात् 'अस्मान्' पद को णो आदेश हो। णो हसइ। अस्मान् हसति ॥ ४४ ॥

## आडि मे ममाइ ॥ ४५ ॥

**अस्मद् पदस्य आडि परतो मे, ममाइ इत्येतावादेशौ भवत । मे कअ, ममाइ कअ[1] ॥ ४५ ॥**

आङि मे ममाइ—टाप्रत्यये सिद्धस्य अस्मद पदस्य मे, ममाइ इत्यादेशौ स्त । मे, ममाइ किअ । मया कृतमित्यर्थ ॥ ४५ ॥

आङीति। अस्मद्-शब्द के टाप्रत्यय के परे सिद्ध 'मया' इसको मे, ममाइ ये आदेश हों। मे किअ। मया कृतम्। अथवा-ममाइ किअ। मया कृतम्। इति ॥ ४५ ॥

## डौ च मइ मए ॥ ४६ ॥

**अस्मद् पदस्य डौ परतो मइ, मए इत्येतावादेशौ भवत । चकारात्तृतीयैकवचने च। मइ, मए ठिअ[2]। मइ, मए कअ[3] ॥ ४६ ॥**

ङौ च मइ मए—टाप्रत्यय ङिप्रत्यये सिद्धस्य अस्मद पदस्य एतौ स्त । मइ, मए। मया, मयि वा। 'टा प्रत्ययेऽस्मदो णे, मि स्यातां द्वावपरावपि'। णे, मि=मया॥

ङौ चेति। टाप्रत्यय के परे सिद्ध 'मया' पद को और ङि के परे सिद्ध 'मयि' पद को मइ, मए ये आदेश हों। मया, मयि दोनों में मइ, मए दोनों होंगे। टाप्रत्यय में सिद्ध 'मया' को णे, मि ये दो और भी होंगे। णे, मि। मया के स्थान में ॥ ४६ ॥

## अह्मेहिं भिसि ॥ ४७ ॥

**अस्मद् पदस्य भिसि अह्मेहिं इत्ययमादेशो भवति। अह्मेहिं कअं[4] ॥**

अम्हेहिं भिसि—भिसि सिद्धस्य अस्मद पदस्य अम्हेहिं इत्यादेश स्यात्। अम्हेहिं। 'णे, अम्हे, अम्ह, अम्हाण चत्वारोऽन्येऽस्मदो भिसि'। णे, अम्हे, अम्ह, अम्हाण इति। अस्माभिरिति ॥ ४७ ॥

अम्हे-इति। अस्मद्-शब्द के भिस् के परे सिद्ध 'अस्माभि' को अम्हेहि आदेश हो। एव णे, अम्हे, अम्ह, अम्हाण ये चार और होंगे। अम्हेहिं, णे, अम्हे, अम्ह, अम्हाण= अस्माभि को होंगे ॥ ४७ ॥

## मत्तो मइत्तो ममादो ममादु ममाहि ङसौ ॥ ४८ ॥

**अस्मद् पदस्य ङसौ परत एत आदेशा भवन्ति। मत्तो गदो। मइत्तो, ममादो, ममादु, ममाहि गदो[5]। (स्पष्टानि, क्तान्तस्य गमे १२=२ त्-द्, ५-१ ओ) ॥ ४८ ॥**

मत्तो मइत्तो ममाओ ममाउ[6] ममाहि ङसौ—ङसौ सिद्धस्य अस्मद पदस्य एते पञ्च स्यु । मत्तो, मइत्तो-इत्यादय । मद् इत्यर्थ ॥ ४८ ॥

---

१ मया कृतम्। २ मयि स्थितम्। ३ मया कृतम्। ४ अस्माभि कृतम्। ५ मत् गत। ६ संजीवनीसमत पाठ।

मत्तो इति । अस्मद्शब्द के ङसि के परे सिद्ध 'मत्' को मत्तो, मइत्तो, ममाओ, ममाउ, ममाहि ये पाँच आदेश हों । 'मत्' के स्थान पर पाँचों होंगे ॥ ४८ ॥

## अह्माहिन्तो अह्मासुन्तो[1] भ्यसि ॥ ४९ ॥

**अस्मद् पदस्य भ्यसि परतो अह्माहिन्तो, अह्मासुन्तो इत्येतावादेशौ भवत । अह्माहिन्तो, अह्मासुन्तो गदो[2] ॥ ४९ ॥**

अम्हाहिन्तो अम्हासुन्तो भ्यसि—'अस्मभ्य'मित्यस्य एतौ स्त । अम्हाहिन्तो अम्हासुन्तो अण्णो । 'अम्हेहिन्तो च अम्हेहि अम्हेन्तो वाऽस्मदो भ्यसि' । अस्मदित्यर्थ ॥ ४९ ॥

अम्हा०–इति । अस्मद्शब्द के भ्यस् के परे सिद्ध 'अस्मभ्यम्' पद को अम्हा हिन्तो, अम्हासुन्तो ये आदेश हों । 'अस्मद्' को, अम्हेहिन्तो, अम्हेहि, अम्हेन्तो ये तीन आदेश और हों । अस्मद् के स्थान पर पूर्वोक्त पाँचों का प्रयोग होगा ॥ ४९ ॥

## मे मम मह मज्झ ङसि ॥ ५० ॥

**अस्मद् पदस्य ङसि परत एत आदेशा भवन्ति । मे धण । मम, मह, मज्झ धण[3] ॥ ५० ॥**

**मे मम मह मज्झ ङसि**—ङसि अस्मद सिद्धस्य 'ममे'त्यस्य एते स्यु । मे, मम, मह, मज्झ पुत्तो । मम पुत्र ॥ ५० ॥

मे इति । अस्मद्शब्द के ङस् के पर सिद्ध 'मम' पद को मे, मम, मह, मज्झ ये आदेश हों । मम को चारो आदेश यथाप्रयोग में होंगे । मज्झ पुत्तो=मम पुत्र ॥५० ॥

## मज्झणो[4] अह्म अह्माणमह्मे आमि ॥ ५१ ॥

**अस्मद् पदस्य आमि परत एत आदेशा भवन्ति । मज्झणो, अह्म, अह्माण, अह्मे धण । अस्माकं धनम् ॥ ५१ ॥**

**णो अम्ह अम्हाण अम्हे आमि[5]**—आमि अस्मद सिद्धस्य 'अस्माक'मित्यस्य एते स्यु । णो, अम्ह, अम्हाण, अम्हे वल्लहो । अस्माक वल्लभ ॥ ५१ ॥

णो इति । अस्मद्–शब्द के आम् के परे सिद्ध 'अस्माकम्' को णो, अम्ह, अम्हाण, अम्हे ये आदेश हों । अम्हे वल्लहो=अस्माक वल्लभ । इसीप्रकार णो, अम्ह, अम्हाण भी 'अस्माक' के स्थान पर होंगे ॥ ५१ ॥

## ममम्मि ङौ ॥ ५२ ॥

**अस्मद् पदस्य ङौ परतौ ममम्मि इत्यादेशो भवति । ममम्मि ठिअ[6] । पूर्वोक्तौ मइ, मए इत्येतौ च ॥ ५२ ॥**

**ममम्मि च[7]**—ङिप्रत्यये सिद्धस्य अस्मद पदस्य मयीत्यस्य ममम्मि इति स्यात, चकारात् पूर्वोक्तावपि । मइ, मए, ममम्मि । मयि इति ॥ ५२ ॥

---

१ अम्हेहिन्तो अम्हेसुन्तो । का० पा० २ अस्मद् गत । ३ मम धनम् । ४ मज्झाणो । का० पा० । ५ सजीवनीसंमत पाठ । ६ मयि स्थितम् । ७ सजीवनीसंमत पाठ ।

## अह्मेसु सुपि ॥ ५३ ॥

अस्मद् पदस्य सप्तमीबहुवचने सुपि परत अह्मेसु इत्ययमादेशो भवति। अह्मेसु ठिअं[1] ॥ ५३ ॥

अम्हेसु सुपि—सुपि सिद्धस्य अस्मद पदस्य अम्हेसु इति स्यात्। अम्हेसु मई ठिआ। 'अम्हासु इति चादेशो द्वितीयोऽप्यस्मद सुपि'। अम्हासु सद्धा। युष्मदस्मदव्ययमलिङ्गम्। त्रिष्वपि लिङ्गेषु साम्यम्। 'बिन्दुष्टामोर्ण इत्यादौ सन्नसन्नपि वा क्वचित्'। धम्मेण, धम्मेण। जम्माण, जम्माण। कम्मेहिं, कम्मेहि। गामाउ, गामाउ। सरेम, सरेसु। तुज्झ तुज्झ। अम्हेहिं, अम्हेहि। मह, मह। इत्यादौ लक्ष्यानुसारेण अबिन्दुष्वपि बिन्दुमङ्गावोऽवगन्तव्य ॥ ५३ ॥

अम्हेसु इति। अस्मद्शब्द के सप्तमीबहुवचन में सिद्ध 'अस्मासु' को अम्हेसु आदेश हो। अह्मेसु मई ठिआ। अस्मासु मति स्थिता। अस्मासु को दूसरा अम्हासु भी आदेश होता है। अह्मासु सद्धा=अस्मासु श्रद्धा। युष्मद्, अस्मद् और अव्यय अलिङ्ग हैं, अर्थात् पुलिङ्ग-स्त्रीलिङ्ग नपुंसकलिङ्गादिकृत इनके रूपों के आदेश में किसी प्रकार का भेद नहीं है। अत एव तीनों लिङ्गों में समान रूप होंगे। टा, आम् के परे वैकल्पिक सिद्ध अनुस्वार, तृतीयाबहुवचन, षष्ठी, सप्तमी, पञ्चमी आदि विभक्तिओं में असिद्ध अनुस्वार लक्ष्यानुरोध से कहीं-कहीं विकल्प से होगा। धम्मेण, धम्मेण। गामाउं गामाउ। मह, मह। इत्यादि ॥ ५३ ॥

## द्वेर्दो ॥ ५४ ॥

पदस्येति निवृत्तम्। सुपीति वर्तते। द्विशब्दस्य दो इत्ययमादेशो भवति सुपि परतः। दोहिं (प्राकृते द्विवचन नास्तीति नियमात्' द्विश ब्दात् भिस स्थाने ५-५ हिं, शे० स्प०)। दोसु। द्वाभ्याम्, द्वयो ॥ ५४॥

द्वेर्द्वो—द्विशब्दस्य सुपि परे दो इत्यादेश स्यात्। दोहिं, दोसु ॥ ५४ ॥

द्वेर्दो इति। द्विशब्द को सुप् के परे दो आदेश हो। तृतीयाबहुवचन में दोहिं। हिं आदेश ॥ ५४ ॥

## त्रेस्ति ॥ ५५ ॥

त्रिशब्दस्य सुपि परत ति इत्यादेशो भवति। तीहिं। तीसु (५-१८ दीर्घः, ५-५ भिस्=हिं)। त्रिभि। त्रिषु ॥ ५५

त्रेस्ती[3]—त्रिशब्दस्य सुपि परे ती इत्यादेश स्यात्। तीहिं, तीसु ॥ ५५ ॥

त्रेरिति। त्रिशब्द को सुप् के परे ती आदेश हो। तीहिं=त्रिभिः। सप्तमी में तीसु=त्रिषु ॥ ५५ ॥

## तिण्णि[4] जश्शस्भ्याम् ॥ ५६ ॥

---

१ अस्मासु स्थितम्। २ एव सर्वत्रबोध्यम् ३ सजीवन्यादिसमता पाठा। ४ तिस्मि तिणा-तिणि-तिस्सि-तिण्णि। का० पा०।

त्रिशब्दस्य जश्शस्भ्याम् सह तिण्णि इत्यादेशो भवति। तिण्णि आगदा। तिण्णि पेक्ख (स्पष्टानि)। त्रय आगता । त्रीन् प्रेक्षस्व ॥ ५६॥

तिणि[1] जश्शस्भ्याम्—जसा शसा च सह त्रिशब्दस्य तिणि स्यात्। तिणि २, त्रय, त्रीन् वा ॥ ५६ ॥

तिणीति। जस्-शस् के सहित त्रिशब्द को तिणि आदेश हो। त्रय का और त्रीन् का तिणि होगा ॥ ५६ ॥

## द्वेर्दुवे दोणि वा ॥ ५७ ॥

द्विशब्दस्य जस्शस्भ्या सह दुवे, दोणि इत्येतावादेशौ वा भवत । दुवे कुणन्ति। दोणि कुणन्ति। पक्षे-दो कुणन्ति। द्वौ कुरुत । दुवे पेक्ख। दोणि पेक्ख। दो पेक्ख। (८-१३ कृञ् = कुण, द्विवचनाभाव नियमात् ४७-४ झि = न्ति, कुणन्ति, शे० स्प० )। द्वौ प्रेक्षस्व ॥ ५७॥

द्वेदुवे दोणि[2]—जसा शसा च सह द्विशब्दस्य दुवे, दोणि इत्यादेशौ भवत । 'द्वेर्जश्शस्भ्या सह स्याता द्वावन्यौ वेणि, वे इति'। दुवे, दोणि, वेणि, वे। द्वौ इति॥

द्वेरिति। जस्-शस् के सहित द्विशब्द को दुवे, दोणि ये दो आदेश हों। प्राकृत में द्विवचन नहीं होता है, अत द्विशब्द के साथ जस्-शस् का ग्रहण है। एव जस् के सहित द्विशब्द को 'वेणि, वे' ये दो आदेश और भी होंगे। चारों प्राकृतप्रयोगों में सस्कृत के द्वौ २, द्वे २ को होंगे ॥ ५७॥

## चतुरश्चत्तारो चत्तारि ॥ ५८ ॥

चतुश्शब्दस्य जश्शस्भ्या सह चत्तारो, चत्तारि इत्येतावादेशौ भवत । चत्तारो, चत्तारि पुरिसा कुणन्ति[3] (१-२३ रु = रि, ५-११ दीर्घ, ५-२ जसो लोप )। चत्तारो पुरिसे पेक्ख[4] (५-१२ अ-ए, ५-२ शसो लोप, अन्यत् पूर्ववत् ) ॥ ५८॥

चतुरश्चत्तारो चत्तारि—चतुर्-शब्दस्य जश्शस्भ्या सह एतौ स्त । स्पष्टम्॥

चतुरिति। जस्-शस् के सहित चतुर्-शब्द को चत्तारो, चत्तारि ये होंगे। चत्वार, चतुर । चतस्र २, चत्वारि २॥ ५८॥

## एषामामो ण्हं ॥ ५९ ॥

एषां द्वित्रिचतु शब्दानामाम स्थाने ण्ह इत्ययमादेशो भवति। दोण्ह धण ( ६-५४ द्वि = दो, शे० स्प० )। तिण्ह धण ( ६-५५ त्रि=ति, शे० स्प० )। चतुण्ह[5] धण ( ४-६ रलोप, शे० स्प० ) ॥ ५९॥

एषामामो ण्ह—द्वि त्रि, चतुर्-शब्दानाम् आम्प्रत्ययस्य ण्ह स्यात्। दोण्ह।

---

१ सजीवनीसमत पाठ । २ सजीवनीसमत पाठ । ३ चत्वार पुरुषा कुर्वन्ति। भिसादौ रेफतकारयोर्लोप । तेन-चऊर्हि। का० पा०। ४ चतुर पुरुषान् पश्य। ५ चतुण्ह-चउण्ह। का० पा०।

तिण्ह । चउण्ह । 'कतिपञ्चादिशब्दानाम् आमो ण्ह नैव दीर्घता' । कइण्ह, पचण्ह, छण्ह, सत्तण्ह । इत्यादि ॥ ५९ ॥

एषामिति । द्वि, त्रि, चतुर्-शब्द से पर आम् को ण्ह हो । उक्त सूत्रों से दो, ति आदेश इनको होंगे । दोण्ह । तिण्ह । चउण्ह । कतिशब्द एव पञ्चन् आदि शब्दों से पर आम् को ण्ह होगा । कइण्ह, पचण्ह-इत्यादि ॥ ५९ ॥

## शेषोऽदन्तवद् ॥ ६० ॥

शेष[1] सुब्विधिरदन्तवद्भवति । अकारान्ताद् 'भिसो हिं' इत्ययमादेश उक्त इकारोकारान्तादपि भवति । अग्गीहिं । वाऊहिं (५-१८ सू० स्प०) । एवं मालाहिं । णईहि । बहूहिं । अग्गिस्स ( ३-२ नलोप , ३-५० गद्वि०, ५-८ ङस्=स्स ) । वाउस्स (२-२ यलोप , शे० पू०) । अग्गीदो । वाऊदो ( ५-६ ङसि = दो ) । अग्गीसु । वाऊसु ( पूर्ववत् यलोपदीर्घौ )। एव दोहि (६-५४ द्वि = दो, ५-५ भिस् = हिं) । तीहिं (६-५५ त्रि=ति, ५-१८ दीर्घः)। चऊहि (४-६ रलोप , २-२ तलोप , ५-१८ दीर्घ, शे० पू०) ॥६०॥

शेषाददन्तवत्[2]—अदन्ताद् यो विधि प्रोक्त स शेषात् अदन्तातिरिक्तशब्दा दपि स्यात् । तेन अदन्तात् विहित शसो लोप आदन्तादिदुद न्ताच्च भवति । बाला, बालाओ । गिरीओ, गिरीउ । साणूओ, साणूउ । 'ए सुप्यङिङसो -सूत्रे नेष्ट शेषाद दन्तवत्' । रामाओ । सालिणो । पीलुणो । सहीओ । बहूओ । 'अकारलोपसूत्रेऽपि नेष्ट शेषाददन्तवत्' । सव्वाओ । बुद्धीओ । धेणूओ । सहीओ । बहूओ ॥ ६० ॥

शेषादिति । अदन्त से जो कार्य कहे गये हैं वे आदन्त से तथा इदन्त, उदन्त से भी होंगे । जैसे 'अस्शसोर्लोप ' से लोप । बाला, गिरि, सानु शब्दों से भी होगा । परन्तु 'ए सुप्यङिङसो ' सूत्र में 'शेषाददन्तवत्' अभिमत नहीं है, अत रामा, शालि, पीलु, सखी, वधू शब्दों में एकार नहीं होगा । किन्तु रामाओ में 'जसो वा' से जस् को ओकार । सालिणो, पीलुणो में 'इदुतो शसो णो' से णो आदेश । सहीओ, बहूओ में 'स्त्रियां शस उदोतौ' से ओकार होगा । एव अकारलोपविधायक सूत्र में भी अदन्तवद्भाव नहीं होगा । इससे सव्वाओ, बुद्धीओ, धेणूओ, सहीओ, बहूओ, इत्यादिकों में 'क्वचिदपि लोप' से लोप नहीं होगा, किंतु अदन्तवद्भाव होने से 'जस् ङस्याम्सु दीर्घ ' से दीर्घ होगा ॥ ६० ॥

## न ङिङस्योरेदातौ ॥ ६१ ॥

इकारोकारान्तानां ङिङस्योरदन्तवद् एकाराकारौ न भवत । अग्गिम्मि (६-५२ ङि = म्मि, शे० अग्गिस्सेतिवत् ) । वाउम्मि (२-२ यलोप , शे० स्प० ) । अग्गीदो, वाऊदो । अग्गीदु, वाऊदु । अग्गीहि, वाऊहि ( ५-६ ङसि = दो, दु, हि, शे० पू० स्प० ) ॥ ६१ ॥

---

१ शेषेषु विधि । का० पा० । २ पाठ एष सजीवन्यादिसमत ।

न ङिङस्योरेदातौ—अकारान्तरहितात् प्रातिपदिकात्परयो ङि ङसिप्रत्यययो रेत् आच न स्त । गिरिम्मि, गिरीउ, गिरीओ ॥ ६१ ॥

न ङिङस्योरिति । अकारान्त से रहित प्रतिपदिक से पर ङि-ङसि-प्रत्ययों को एकार और आकार न हों। गिरिम्मि, गिरीउ, गिरीओ। ङि मे म्मि और ङसि मे उ, ओ ॥ ६१ ॥

## ए भ्यसि ॥ ६२ ॥

नेत्यनुवर्तते । भ्यसि परत इकारोकारान्तयोरदन्तवदेत्वं न भवति । अग्गीहिन्तो, वाऊहिन्तो, अग्गीसुन्तो वाऊसुन्तो (५-६, १२ सूत्रयोर्बाध, ५-११ दीर्घ, ५-७ भ्यस्=हिन्तो, सुन्तो, शे० पू० ) ॥ ६२ ॥

ए भ्यसि—भ्यसि नकारान्तस्य एकारो न स्यात् । पच्चाहिन्तो, पच्चासुन्तो । अग्गीहिन्तो । वाऊहिन्तो ॥ ६२ ॥

ए भ्यसीति । भ्यस् के परे नकारा त को एकार नहीं होगा । पच्चाहिन्तो इत्यादि । परन्तु वस्तुत नकारान्त के नकार का लोप होने पर अदन्त प्रातिपदिक नहीं है, और 'ए भ्यसि' में नकारान्त इस अर्थ का बोधक पद भी नहीं है और अदन्तादिदेश सजातीय अच् में होगा, नकारान्तादि में नही । अत इसके उदाहरण अग्गीसुन्तो, वाऊसुन्तो होंगे । सदानन्द तथा वसन्तराज दोनों भ्रम खागये है ॥ ६२ ॥

## द्विवचनस्य बहुवचनम् ॥ ६३ ॥

सर्वासां विभक्तीनां सुपा तिङां च द्विवचनस्य बहुवचनं प्रयोक्तव्यम् । वृक्षौ, वच्छा । वृक्षाभ्याम्, वच्छेहि, वच्छाहिन्तो । वृक्षयो, वच्छेसु, वच्छाण । ( स्पष्ट, पञ्चमपरिच्छेदे व्याख्याता ) । तिङा यथा–तिष्ठत, चिट्ठन्ति ( १२-१६ स्था = चिट्ठ, ७-४ झि = न्ति) ॥ ६३ ॥

द्विवचनस्य बहुवचनम्—सुप्तिङ्सम्बन्धिनो द्विवचनस्य नित्य बहुवचन स्यात् । दो हत्था । दो होन्ति ॥ ६३ ॥

द्विवचनेति । सुप्तिङ् के द्विवचन को बहुवचन हो । प्राकृत में द्विवचन नहीं होता । दो हत्था = द्वौ हस्तौ । दो होंति = द्वौ भवत ॥ ६३ ॥

## चतुर्थ्याः षष्ठी ॥ ६४ ॥

इति प्राकृतसूत्रेषु षष्ठ परिच्छेद ॥



चतुर्थीविभक्ते स्थाने षष्ठीविभक्तिर्भवति[1] । बह्मणस्स देहि ( ३-२

---

१ तादर्थ्यङेर्वा ८।३।१३२ तादर्थ्यविहितस्य ङेश्चतुर्थ्येकवचनस्य स्थाने षष्ठी वा भवति । देवस्स देवाय । देवार्थमित्यर्थ । ङेरिति किम् ? देवाण ।

वधाड्डाइश्च वा ८।३।१३३ वधशब्दात्परस्य तादर्थ्यङेर्डिद् आइ॰ षष्ठी च वा भवति । वहाइ, वहस्स, वहाय । वधार्थमित्यर्थ ।

रलोप, ५-१० ङस् = स्स, देहीति संस्कृतसम )। बह्मणाण देहि। ब्राह्मणाय देहि। ब्राह्मणेभ्यो देहि (५-११ आमि दीर्घ, ५-४० आम् = ण, शे० स्प०) ॥ ६४ ॥

इति प्राकृतप्रकाशे सर्वनामविधिर्नाम षष्ठ परिच्छेद ॥



**चतुर्थ्या षष्ठी**—चतुर्थ्या विभक्ते स्थाने षष्ठी विभक्ति स्यात्। बम्हणस्स देसु, ब्राह्मणाय देहि ॥ ६४ ॥

**चतुर्थ्या इति। चतुर्थी विभक्ति के स्थान मे षष्ठी होगी। जैसे ब्राह्मणाय का बम्हणस्स-इति ॥ ६४ ॥**

## ( क्वचिन्न तादर्थ्ये ॥ )

**क्वचिन्न तादर्थ्ये**[1]— तादर्थ्ये विहितायाश्चतुर्थ्या क्वचित् षष्ठीविभक्तिर्न स्यात्। घराअ दार। क्वचिद्-ग्रहणान्न सर्वत्र। तेन-देवाण बली=देवेभ्यो बलि, इत्यादौ षष्ठ्येव। 'व्यत्ययोऽप्यासाम्'। अच्छीसु पिज्जसि। अक्षिभ्या पीयसे। अत्र तृतीया स्थाने सप्तमी। रत्ति दिट्ठो। रात्रौ दृष्ट। अत्र सप्तमीस्थाने द्वितीया। 'अन्यादृश्यपि वीप्साया द्विरुक्ति क्वापि दृश्यते'। अगमगाइ। अङ्गानि अङ्गानि। अगमगाण। अङ्गानामङ्गानाम्। अगमगेसु। अगेषु २। वच्च, वच्चह। व्रजत २। होहोइ। भवति भवति-इत्यादिषु बोध्यम् ॥

**इति श्री म० म० मथुराप्रसादकृतौ चन्द्रिकाव्याख्याया षष्ठ परिच्छेद।**



---

क्वचिद् द्वितीयादे ८।३।१३४। द्वितीयादीना विभक्ताना स्थाने षष्ठी भवति क्वचिद्। सीमाधरस्स वन्दे। तिस्सा मुहस्स भरिमो। अत्र द्वितीयाया षष्ठी। धणस्स लद्धो, धनेन लब्ध इत्यर्थ। चिरस्स मुक्का। चिरेण मुक्तेत्यर्थ। अत्र तृतीयाया। चोरस्स बीहइ। चोराद्बिभेतीत्यर्थ। अत्र पञ्चम्या। पिट्ठीए केसभारो। अत्र सप्तम्या ॥

पञ्चम्यास्तृतीया च ८।३।१३६। पञ्चम्या स्थाने क्वचित् तृतीयासप्तम्यौ भवत। चोरेण बीहइ। चोराद्बिभेतीत्यर्थ। अ तेउरे रमिउमागओ राया। अ त पुराद् रत्वागतो राजा इत्यर्थ ॥

द्वितीयातृतीययो सप्तमी ८।३।१३५। द्वितीयातृतीययो स्थाने क्वचित्सप्तमी भवति। नयरे न जामि। अत्र द्वितीयाया। तिसु तेसु अल किआ पुहवी। अत्र तृतीयाया ॥

सप्तम्या द्वितीया-८।३।१३७। सप्तम्या स्थाने क्वचिद् द्वितीया भवति। विज्जोय भरइ रत्ति ॥

आर्षे तृतीयाऽपि दृश्यते। तेण कालेण, तेण समयेण। तस्मिन् काले, तस्मिन् समय इत्यथ। प्रथमाया अपि द्विताया दृश्यते। चउव्वीस पि जिणवरा। चतुर्विंशतिरपि जिनवरा इत्यर्थ। इति हेम।

१ नेद सूत्र भामहवृत्तौ।

क्वचिदिति । तादर्थ्य मे विहित चतुर्थी को षष्ठी नही होगी । जैसे घराअ दारु' यहाँ 'गृहस्य घरोऽपतौ' ( ४+२४ ) से घर आदेश, 'कगचज०' ( न १ ) से यलोप, घराअ होगा । षष्ठी नही हुई । 'क्वचित् ग्रहण से बहुतों के तादर्थ्य मे निषेध नही होगा, किन्तु षष्ठी ही होगी । जैसे देवाण बली । देवेभ्य बलि प्राप्त था । वस्तुत प्रकृति विकृतिभाव में ही तादर्थ्य यहाँ माना गया है, अत एव पाणिनि ने 'चतुर्थी तदर्थार्थ' सूत्र मे बलिहित-इत्यादि पृथक् पढ़े हैं, और जहाँ प्रकृति की विकृति नही है, वहाँ षष्ठी ही होगी । जैसे 'अश्वस्य घास ' यही होगा, 'अश्वाय घास ' नही होगा । क्योंकि यहाँ प्रकृति विकृतिभाव नही है । परन्तु अनुभूतिस्वरूपाचार्यादि जो तदर्थमात्र मे तादर्थ्य मानते है उनके यहाँ अश्वेभ्य, अथवा अश्वाय घास यही होगा। उसी व्यापक तादर्थ्य को लेकर यह सूत्र है । अस्तु, 'व्यत्ययोऽप्यासाम्' इन विभक्तियों का व्यत्यय भी होता है अर्थात् अन्य विभक्ति के अर्थ मे अन्य विभक्ति । जैसे 'अच्छीसु पिअसि' अक्षिभ्या यह करण पीने का है, अत तृतीया प्राप्त थी, सप्तमी हो गई । रत्तिं दिट्ठो । यहाँ रात्रौ इस सप्तमी के स्थान मे द्वितीया हो गई । एव वीप्साद्विरुक्ति में भी पूरे पद को द्वित्व न होकर केवल पदांश को ही द्वित्व हो जायगा । जैसे अङ्गानि का अगाइ होता है, वीप्सा में अगाइ को द्वित्व प्राप्त था, परन्तु अग पद को द्वित्व और अनुस्वार । अगमगाइ । एवम् अङ्गानाम् अङ्गानाम् का अगमगाण । अङ्गेषु अङ्गेषु का अगमगेसु होगा । एव धातुओं मे भी कही अवयवमात्र को द्वित्व होगा । जैसे 'व्रजत' को द्वित्व प्राप्त था । व्रज को वच्च आदेश । त को हकार । वच्चह को द्वित्व प्राप्त था, किंतु केवल वच्च को द्वित्व हुआ । 'वच्च वच्चह' हुआ । एव भवति का होइ सिद्ध होता है । भवति को वीप्सा में द्वित्व होने पर जैसे भवति भवति होता है वैसे ही होइ को भी द्वित्व प्राप्त था, किन्तु हो मात्र को द्वित्व हुआ, अत हो होइ सिद्ध होगा । परन्तु यह क्वाचित्क नियम हे, सार्वत्रिक नही । अत 'चिनोतु' का वीप्सा में चिणउ-चिणउ होगा । इति ॥

इति श्री म० म० मथुराप्रसादकृते लोकभाषानुवादे षष्ठ परिच्छेद ।



# अथ सप्तमः परिच्छेदः

## तितिपोरिदेतौ ॥ १ ॥

**त, तिप् इत्येतयोरेकस्य स्थाने इत्, एत् इत्येतावादेशौ भवत । पढइ ( २-२४ ठ् = ढ, शे० स्प० ), पढए । सहइ, सहए । ( यथाक्रम तिप इ, तस्य ए ) पठति । पठत । सहति । सहते ॥ १ ॥**

ततिपोरिदेतौ—आत्मनेपदपरस्मैपदयो प्रथमपुरुषैकवचनयो ततिबित्येतयो प्रत्येकम् इ, ए इत्येतावादेशौ स्त । तकारोऽसदेहार्थं । रमइ, रमए । विरमइ, विरमए । ततिपोर्व्यत्ययेन ग्रहणाद् यथासख्य न । 'शौरसेन्या विभाषासु भवेद् दिरपि तिप्तयो '। यथा-'चित्ते विहुट्टदि न तुट्टदि सा गुणेसु' इत्यादि । सिद्धावस्थाया साध्यावस्थाया वा लक्ष्यवशात् परिभाषेयम् । ततिपोरिदेतावित्यादिना 'एकाचो हीअ' इत्येव मन्येन प्रकारेण ये न तिबादीनामादेशा विधास्यन्ते ते सिद्धावस्थाया भूतकाले साध्या वस्थाया वर्तमानकाले लक्ष्यवशाद् भवन्तीति परिभाष्यते । भूते-हसइ, हसए । अहसत्, अहसीत्, जहास । वर्तमानेऽपि हसइ, हसए । हसति । पेच्छइ, पेच्छए । प्रैक्षत, प्रैक्षिष्ट, प्रेक्षाचक्रे ॥ १ ॥

**ततिपोरिति । आत्मनेपद तथा परस्मैपद के प्रथमपुरुष एकवचन के त, तिप् को इ, ए ये आदेश हों । इत्-एत् में तकार असदेहार्थ है । रम्-ति । 'शेषाणामदन्तता' ( ७+७८ ) से अदन्तता । रमइ, रमए । विपूर्वक परस्मैपदी है । विरमइ, विरमए । 'शौरसेनी में तिप् त को दि भी होता है'। घुट परिवर्तने ( ९ से ) घ को ह । सिद्धावस्था में अथवा साध्यावस्था में लक्ष्यानुरोध से यह नियामक सूत्र है, अर्थात् भूतकाल के प्रत्ययों की सिद्धावस्था में और वर्तमानकाल के प्रत्ययों की साध्यावस्था में । 'ततिपो०' इससे और 'एकचो हीअ' इससे या अहसीत्, जहास भूतकाल में, एव हसति वर्तमानकाल में । तथा ईक्ष-आत्मनेपदी पेच्छइ, पेच्छए-प्रैक्षत, प्रैक्षिष्ट, प्रेक्षाचक्रे भूतकाल में । एव प्रेक्षते वर्तमानकाल में होंगे ॥ १ ॥**

## थास्सिपोः सि से ॥ २ ॥

**थास्, सिप्-इत्येतयोरेकैकस्य स्थाने सि, से इत्येतावादेशौ भवत । पढसि । पढसे । सहसि । सहसे । ( पूर्ववत् ठ्=ढ, अन्यत्सुगमम् ) ॥२॥**

सिप्थासो[१] सि से—सिप्थासो सि, से इत्येतौ स्त । जाणासि, जाणासे । जानासि । वेवसि, वेवसे । वेपसे ॥ २ ॥

**सिबिति । सिप् को सि-से, एव थास् को सि-से होते हैं । उदाहरणों में स्पष्ट है ॥ २ ॥**

( स० ६ से णकार । १५ से प को व । १८ से क्ष को छकार । ४ से रेफलोप )

---

१ सजीवनीसमत पाठ ।

# अथ अष्टमः परिच्छेदः

## भुवो हो हुवो ॥ १ ॥

**भू सत्तायाम्, एतस्य धातोर्हो, हुव इत्येतावादेशौ भवतः। होइ (७-५ सू० स्प०)। हुवइ (७-१ ति = इ)। होन्ति, हुवन्ति[1] (७-४ झि = न्ति, ४-१७ बि०, शे० स्प०) ॥ १ ॥**

भुवो होहुवौ[2]—सत्तार्थकस्य भूधातो हो हुव इत्यादेशौ भवतः। होइ, हुवइ। 'ततिपोरिदेतौ'। भवति। होन्ति, हुवन्ति। भवन्ति। साधुत्व पूर्वोक्तैरेव सूत्रैः कार्यम् ॥

**भुवो-इति। भू सत्तायाम्। सत्तार्थक भूधातु को हो हुव ये आदेश होते हैं। 'ततिपो०' से तिप् को इकार। होइ, हुवइ। साधुत्व सर्वत्र पूर्ववत् जानना। भवति ॥१॥**

## क्ते हुः[3] ॥ २ ॥

**भुवः क्तप्रत्यये परतो हु इत्यादेशो भवति। हुअ[4] (२-२ तलोप, ५-३० बि०) ॥ २ ॥**

क्ते हू[5]—क्तप्रत्यय परतः भूधातो हू इत्यादेशः स्यात्। हूअ। 'कगचजे०'ति तलोपः। भूतम्। 'उपसर्गात् परस्यापि भुवो हूरदुरुत्सम'। दुरुत्सभ्यो निषेधार्थमिद-मिति फलति। अणुहूओ = अनुभूतः। अहिहूओ = अभिभूतः। परिहूअ=परिभूतम्। अदुरुत्सम इति किम्? दुब्भूओ दुर्भूतः, उब्भूओ उद्भूतः। सभूओ सभूतः। 'भूओ इति पिशाचे स्यात् तत्र क्ते हू भुवो नहि'। भूओ=भूतः। पिशाच इत्यर्थः ॥ २ ॥

**क्ते हू इति। क्तप्रत्यय के परे भू धातु को 'हू' यह आदेश हो। हो हुव के अपवाद से। 'कगचज' से तकारलोप। हूअ। उपसर्ग से भी पर भूधातु को हू आदेश हो, परतु दुर्-उत्-सम् उपसर्ग से पर होने पर नहीं हो। अणुहूओ, 'नो णः' से णकार। तलोप, ओत्व पूर्ववत्। अनुभूतः। अहिहूओ। 'खघथध०' से भकार को हकार। अभिभूतः। परिहूअ, परिभूतम्। दुर् उत् सम् का निषेध क्यों? दुब्भूओ। दुर् भूतः। 'सर्वत्र लवराम्' से रेफ का लोप, 'शेषादेशयो०' से भकारद्वित्व। 'वर्गेषु युज पूर्वः' से भकार को बकार। दुब्भूओ। उद्भूतः, 'उपरि लोप०' से दकारलोप। अन्य कार्य पूर्ववत्। उब्भूओ। सभूओ। अनुस्वार से पर भकार है, अतः 'खघथध०' से हकार नहीं होगा। पिशाच अर्थ में भू को 'क्ते हू' इससे हू आदेश नहीं होगा। अतः भूओ यही होगा। भूतः = पिशाच इत्यर्थः ॥ २ ॥**

## प्रादेर्भवः ॥ ३ ॥

**प्रादेरुत्तरस्य भुवो भव इत्ययमादेशो भवति। पभवइ (३-३ रलोप, ७-१ ति = इ)। उब्भवइ (३-१ दलोप०, ३-५० भद्वि०, ३-५१ भ् = व्,**

---

१ भवति, भवन्ति। २ सजीवनीसमत पाठ। ३ क्ते हू ८।४।६४। हूअ, अणुहूअ, पहूअ। अविति हु ८।४।६१ बिहुर्जे। हुति-हुनो। हेम०। ४ भूतम्, भूत। ५ सजीवनीसमत पाठ।

**शे० पू० ) । सम्भवइ । परिभवइ[1] ( ४-१७ वर्गान्त०, शे० स्प० ) ॥ ३ ॥**

**प्रादेर्भव**—प्रादेरुपसर्गात् परस्य भुव भव इत्यादेश स्यात । पहवेइ, पहवइ । प्रभवति । अणुहवेइ, अणुहवइ । अनुभवति । अनुस्वारात्परत्वात् 'खघथधे०'ति न हकार । सभवेइ, सभवइ । सभवति । 'अप्रादेरपि तथा दृश्यते भवतेर्भव ।' भवेइ, भवइ । भवति । 'भुव प्रादे परस्य स्यादादेशो हुव्व इत्यपि' । पहुव्वेइ, पहुव्वइ । प्रभवति-इति ॥ ३ ॥

**प्रादेरिति । प्रादिक उपसर्ग से पर भूधातु को भव आदेश हो । पहवेइ, पहवइ । रेफलोप, हकारादेश पूर्ववत् । 'लादेशे वा' से एकार । प्रभवति । अणुहवेइ, अणुहवइ । अनुभवति । सभवेइ, सभवइ । सभवति । प्रादि उपसर्ग के बिना भी कही कही भू को भव आदेश होता है । भवेइ, भवइ । भवति । प्रादिक से पर भूधातु को 'हुव्व' भी आदेश होता है । पहुव्वेइ पहुव्वइ । एकार इकारादिक पूर्ववत् जानना । प्रभवति ॥३॥**

## त्वरस्तुवरः ॥ ४ ॥

**ञित्वरा सम्भ्रमे, अस्य धातोस्तुवर इत्ययमादेशो भवति । तुवरइ[2] ( ७-१ त = इ, शे० स्प० ) ॥ ४ ॥**

**त्वरस्तुवर**—ञित्वरा सभ्रमे-इत्यस्य तुवर इत्यादेश स्यात् । तुवरेइ, तुवरइ । त्वरते । कथ तर्हि तुरिअ ? तुर त्वरणे इत्यस्य बोध्यम् । तूरिअ' इति तु 'रुषादीना वा' इति दीर्घे सेत्स्यति ॥ ४ ॥

**त्वर इति । घबडाने जल्दीकरनेके अर्थ में त्वर धातु को तुवर आदेश हो । तुवरेइ । त्वरते । यदि त्वर को तुवर आदेश सर्वत्र होगा तो 'तुरिअ' कैसे होगा ? इसका उत्तर तुर धातु से तप्रत्यय । 'शेषाणामदन्तता' से अकारान्त । 'क्ते' ६।२२ से इकार । 'कग चज०' से तलोप । तुरिअ । तूरिअ । तूरिअ-मे 'रुषादीना दीर्घ' से दीर्घ ॥ ४ ॥**

## क्ते तुरः[3] ॥ ५ ॥

**क्तप्रत्यये तुर इत्ययमादेशो भवति । तुरिअ[4] ( ७-३२ अ = इ, २-२ तलोप , ५-३० बिं० ) ॥ ५ ॥**

## घुणो घोलः ॥ ६ ॥

**घुण, घूर्ण भ्रमणे, अस्य धातोर्घोल इत्ययमादेशो भवति । घोलइ[5] ( ७-१ ति = इ ) ॥ ६ ॥**

**घुर्णो घोलघुम्मौ[6]**—घुण, घुर्ण भ्रमणे-इत्यस्य घोल, घुम्म इत्यादेशौ भवत । घोलन्तो, घोलमाणो । घुम्मन्तो घुम्ममाणो । लट-घोलइ, घोलेइ । घुम्मइ, घुम्मेइ । 'ततिपो'रिति एत्वे, घोलए, घुम्मए ॥ ६ ॥

**घुर्णो-इति । घुर्ण धातु को घोल घुम्म ये आदेश होते हैं । 'घूर्णो' यह दीर्घ पाठ**

---

१. प्र, उद्, सम् , परि, भवति । २ त्वरते । ३ नेद सूत्र सजीवन्यादिषु । ४ त्वरितम् । ५ घोर्णते—घूर्णते । ६ सजीवनीसमत पाठ ।

'वोरुपधाया दीर्घ इक' से दीर्घ, घूर्ण है। घोलन्तो। 'न्तमाणौ शतृशानचो' से न्त माण शतृ-शानच् को होंगे। 'अत ओत्सो' से ओकार। घोलन्तो, घोलमाणो। घूर्णमान। घोलइ, घोलए। घुम्मइ, घुम्मेइ-इत्यादि का साधुत्व पूर्ववत्॥ ६॥

## णुदो णोल्लः ॥ ७ ॥

**णुद् प्रेरणे, अस्य धातोर्णोल्ल इत्ययमादेशो भवति। णोल्लइ। पणोल्लइ[2] ( ३-३ प्र-इत्यस्य रेफलोप, शे० पू० स्प० )॥ ७॥**

नुदो णोल्ल—प्रेरणे इत्यर्थकस्य णुद्धातोर्णोल्ल इत्यादेश। णोल्लइ, णोल्लेइ। पणोल्लिअ[3]॥ ७॥

नुदो-इति। नुद धातु को णोल्ल आदेश हो। णोल्लइ, णोल्लेइ। 'लादेशे वा' इससे विकल्प से एकार। नुदति। पणोल्लिअ। 'क्ते' से इकार। 'कगचज०' से तलोप। 'नपुसके सोर्बिन्दु' से अनुस्वार। प्रणोदितम्॥ ७॥

## दूडो दूमः[4] ॥ ८ ॥

**दूङ् परितापे, अस्य धातोर्दूमादेशो भवति। दूमइ[5] (स्पष्टम्)॥ ८॥**

## पटेः फलः ॥ ९ ॥

**पट गतौ, अस्य धातोः फल इत्ययमादेशो भवति। फलिअ (७-३२ अ = इ, २-२ तलोप, ५-३० विं०) हिअअ[6] (१-२८ सू० स्प०)॥ ९॥**

पाटे फाल[7]—अट पट गतौ, णिजन्तस्य पट्धातोः फाल इत्यादेशः स्यात्। फालइ, फालेइ, फालावेइ। फालेन्ति, फालावेन्ति। पाटयन्ति। क्त-प्रत्यये फालाविअ[8]॥ ९॥

पाटेरिति। णिजन्त पटधातु को फाल आदेश हो फालावेइ। बहुवचन में 'न्तिहेत्था०' ते न्तिआदेश। अन्य कार्य पूर्ववत्। फालेन्ति, फालावेन्ति। पाटयन्ति। क्तप्रत्यय के परे फालाविअ। पाटितम् इत्यर्थ॥ ९॥

## पदेः पालः[9] ॥ १० ॥

**पद गतौ, अस्य धातोः पाल इत्ययमादेशो भवति। पालेइ[10] (७-३४ अ = ए, ७-१ ति = इ)॥ १०॥**

## वृषकृषमृषहृषामृतोऽरिः ॥ ११ ॥

**वृषादीनामृत स्थाने अरि इत्यादेशो भवति। वरिसइ। करिसइ।**

---

१ नुदो छोण। नुद प्रेरण अस्य धातोर्ल्लोण इत्यादेशो भवति। छोणइ पल्लोणइ। नुदेर्लोणा-लोणाइ पल्लोणाइ। णुदो णोल -णोलइ, णोल्लइ। गमादित्वात् द्वित्व-नुदो ल्लोण। लोणइ, पलोणइ का० पा०। २ नुदति-नुदते। ३ प्रणुन्नम्-इति सजीवन्याम्। ४ नेद सूत्र सजीवन्यादिषु। ५ दूयते— दुनोति। ६ पाटित हृदयम्। ७ सजीवनीसमत पाठ। ८ पाटितम्-इत्यर्थ। ९ नेद सूत्र सजीवन्यादिषु। १० पद्यते।

मरिसइ । हरिसइ[1] ( २-४२ ष = स, ७-४ ति = इ, एवमुत्तरत्रापि कृष, मृष, हृष ) ॥ ११ ॥

वृषादीनामृतोऽरि [2]—वृषादीना धातूना सम्बन्धिन ऋकारस्य अरि स्यात् । ऋकारस्य उपधास्थत्वेन वृषादित्वम् । वृषादिग्रहणात् नृत्यतीत्यादौ न भवति । वरिसउ, वरिसेउ । वरिसिऊण, वरिसेऊण । हरिसिऊण, हरिसेऊण । करिसिऊण, करिसेऊण । करिसइ, करिसेइ । कथ तर्हि कर्षतीत्यस्य कट्ठइ इति ? बहुलग्रहणात् पक्षे ट्ठआदेश । नृत्धातो-नच्चइ ॥ ११ ॥

वृषादीति । वृषादिक धातुओंके ऋकार को अरि आदेश हो । जिनके मध्य में ऋकार होगा वे प्राय वृषादिक है । परन्तु वृषादि का ग्रहण है अत नृत्यति इत्यादिक मे नहीं होगा । वरिसतु । 'शषो स ' से सकार । वर्षतु । वरिसिऊण । 'क्त्वा तूण' से तूण आदेश । 'कगचज' से तलोप । 'ए च क्त्वा०' इससे इकार, एकार । वरिसेऊण । वर्षित्वा । इसी प्रकार हरिसिऊण इत्यादिक भी जानना । प्रश्न यह होता है कि—कृष धातु का 'कट्टइ' कैसे होगा ? बहुलग्रहण से ट्ठ आदेश हो जायगा । 'ऋतोऽत्' से अकार । कट्ठइ । नृत् धातु में 'च्चो व्रजिनृत्यो ' से च्च आदेश । 'ऋतोऽत्' से अकार । नच्चइ । नृत्यति ॥ ११ ॥

## ऋतोऽरः ॥ १२ ॥

**ऋकारान्तस्य धातोर्ऋत स्थाने अर इत्यादेशो भवति । मृ, मरइ । सृ, सरइ । वृ, वरइ[3] ( ७-१ = इ, शे० स्प० ) ॥ १२ ॥**

अन्ते अर [4]—धातोरन्ते वर्तमानस्य ऋत अर स्यात् । हरए, हरेइ, हरइ । अम्हे हरामो, हरिमो । वय हराम । एव धरइ वरइ इत्यादय ॥ १२ ॥

अन्ते इति । धातु क अन्त में विद्यमान ऋकार को अर् हो । हृ धातु, 'ततिपोरिदेतौ' से एकार । हरए । इकार होने में 'लादेशे वा' इससे एकार । हरेइ, हरइ । उत्तम पुरुष बहुवचन में । 'न्तिहेत्थामोमुमा' इत्यादि से मो आदेश । अम्हे हरामो, हरिमो । 'इच्च बहुषु' से आत्व, इत्व । वय हराम । इसी प्रकार धृ वृ इत्यादिकों में जानना॥१२॥

## कृञः कुणो वा ॥ १३ ॥

**डुकृञ् करणे, अस्य धातो प्रयोगे कुणो वा भवति । कुणइ, करइ[5] ( पूर्ववत् स्प० ) ॥ १३ ॥**

कृञ कुण च[6]—कृधातो कुण इत्यादेश स्यात्, चकारात् अर इत्यपि । कुणइ, कुणेइ, कुणए, पक्षे-करेइ, करइ । करए । करोति, कुरुते ॥ १३ ॥

कृञ इति । कृधातु को कुण आदेश हो चकार से अर भी हो । कुणेइ । पक्ष में—करेइ । साधुत्व पूर्ववत् ॥ १३ ॥

---

१ वर्षति । कर्षति । मृष्यति । हृष्यति । भौवादिकस्य हर्षति । २ सजीवन्यादिसमत पाठः । ३ म्रियते । सरति-सर्मति । वरति । सानुबन्धकयो वृणोति-वृणुते । वृणीते । ४ सजीवन्यादिसमत पाठः । ५ करोति-कुरुते । ६ सजीवन्यादिसमत पाठ ।

## जृभो जम्भाअ ॥ १४ ॥

**जभि, जृभी गात्रविनामे, अस्य धातोर्जम्भाअ इत्ययमादेशो भवति। जम्भाअइ[1] (स्पष्टम्) ॥ १४ ॥**

जृभेर्जम्भा[2]—जृभी गात्रविनामे, जृभधातो जम्भा इत्यादेश स्यात्। जम्भाइ, जम्भाअइ। जम्भते। 'जभेर्जम्भेति नादेश सोपसर्गस्य दृश्यते।' विअभइ, विजृम्भते ॥ १४ ॥

जृभेरिति। गात्रविनाम-शरीर का फैलाना, जृम्भा लेना। जृभ धातु को जम्भा यह आदेश हो। जभ को जम्भा आदेश। 'अनदन्तानामद् वा' इससे अकारागम। जम्भाइ जम्भाअइ। जृम्भते। जृभेरिति। उपसर्ग सहित जृभधातु को जम्भादेश नहीं होगा। विअभइ। 'कगचज०' से जलोप। 'ऋतोऽत्' से अकार। 'मो बिन्दु' से म को बिन्दु। विजृम्भते ॥ १४ ॥

## ग्रहेर्गेण्हः ॥ १५ ॥

**ग्रह उपादाने, अस्य धातोर्गेण्हो भवति। गेण्हइ[3] (स्पष्टम्) ॥ १५ ॥**

ग्रहेर्गेण्ह—उपादानार्थे ग्रह्धातोर्गेण्ह इत्यादेश स्यात्। गेण्हइ। गृह्णाति। कर्मणि गेण्हिअइ, गेण्हिज्जइ। गृह्यते ॥ १५ ॥

ग्रहेरिति। ग्रह धातु को गेण्ह आदेश हो। गेण्हइ। गृह्णाति। कर्म मे प्रत्यय के परे गेण्ह आदेश। 'यक इअइज्जौ' इससे यक् को इअइज्ज। 'क्वचिदपि लोप' से अल्लोप। गेण्हिअइ, गेण्हिज्जइ। गृह्यते इत्यर्थ ॥ १५ ॥

## घेत् क्त्वातुमुन्तव्येषु ॥ १६ ॥

**ग्रहेर्घेत् इत्ययमादेशो भवति क्त्वातुमुन्तव्येषु परत। घेत्तूण (४-२३ क्त्वा = ऊण, ३-५० तद्वि०)। घेत्तु (३-५० तद्वि०, २-१२ मबि०)। घेत्तव्व[4] (पूर्ववत्तलोपतद्वि०, ३-२ यलोप, ३-५० वद्वि०, ५-३० बि०) ॥ १६ ॥**

घेत्त[5] क्त्वातुमुन्तव्येषु—ग्रहेघत्त इत्यादेश स्यात् क्त्वा तुमुन् त येषु परत। घेत्तूण, गृहीत्वा। घेत्तु, ग्रहीतुम्। घेत्तव्व ग्रहीतव्यम् ॥ १६ ॥

घेत्तेति। क्त्वा-तुमुन् तव्य प्रत्यय के परे ग्रह धातु को घेत्त आदेश हो। 'अल्लोप' से अकार का लोप। 'कगचज०' से तलोप। घेत्तूण इति। घेत्तव्व। 'अधो मनयाम्' से यलोप। 'शेषादेशयो०' से वकारद्वित्व, घेत्तव्व ॥ १६ ॥

## कृञः का भूतभविष्यतोश्च ॥ १७ ॥

**भूतभविष्यतो कालयो कृञ का इत्ययमादेशो भवति, चकारात् क्त्वातुमुन्तव्येषु परत। काहीअ (७-२४ भूते क्तक्तवतो स्थाने अथवा**

---

1. जम्भते-जृम्भते। 2 सजीवन्यादिसमत पाठ। 3 गृह्णाति—गृह्णीत। 4 गृहीत्वा, ग्रहीतुम्, ग्रहीतव्यम्। 5 सजीवन्यादिसमत पाठ।

**भूतभविष्यदर्थकलस्थाने हीअ इत्यादेश ) । काहिइ ( ७-१२ भवि० धातो पर हिर्भवति, ७-१ ति = इ ) । काऊण ( ४-२३ क्त्वा = ऊण ) । काउ ( २-२ तलोप , ४-१२ मबि० ) । काअव्व[1] ( २-२ तलोप -३-२ मलोप , ४ १२ मबि० ) ॥ १७ ॥**

कृञ का भूतभविष्यतोश्च—भूते भविष्यति च य प्रत्ययस्तस्मिन परे क्त्वा-तुसुन् तव्येषु परत कृधातो का इत्यादेश स्यात् । काहीअ । अकरोत्, अकार्षीत् चकार । काहिइ । करिष्यति, क्रियात्, कर्ता । काऊण, कृत्वा । काउ, कर्तुम् । काअव्व, कर्तव्यम् ॥ १७ ॥

कृञ इति । भूत अर्थ लङ् लुङ् लिट् मे भविष्यत्-लृट् लुट् मे, आशीर्लिङ् मे और क्त्वा, तुमुन्, तव्य प्रत्यय के परे कृञ् धातु को का आदेश हो । भूत अर्थ मे 'एकाचो हीअ' से हीअ आदेश । काहीअ । 'धातोर्भविष्यति हि' से हिविकरण । काहिइ इति । काऊण, काउ, काअव्व-का साधुत्व पूर्ववत् ॥ १७ ॥

## स्मरतेर्भरसुमरौ ॥ १८ ॥

**स्मृ चिन्तायाम् , अस्य धातोर्भर-सुमरौ भवत । भरइ, सुमरइ[2] ( ७-१ ति = इ, शे० स्प० ) ॥ १८ ॥**

स्मरतेर्भरसुमरौ—स्मृधातोर्भर सुमर इत्यादेशौ भवत । स्मृ चिन्तायाम्-भरइ सुमरइ । स्मरति । भरिस्स भरिहिमि । सुमरिस्स, सुमरिहिमि । स्मरिष्यामि ॥ १८ ॥

स्मरतेरिति । स्मृ धातु को भर, सुमर आदेश होते है । स्मृ धातु चिन्ता के अर्थ मे है । भर आदेश । भरइ । एव-सुमरइ । भविष्यद् मे, उत्तमपुरुष, 'इणूमिपोर्मि' से मि । 'मिना स्स वा' से स्स विकरण । 'ए च क्त्वा०' से इकार । भरिस्स । भरिहिमि । एव-सुमरिस्स ॥ १८ ॥

## भियो भावीहौ ॥ १९ ॥

**ञिभी भये, अस्य धातोर्भा-वीहौ भवत । भाइ, बीहइ[3] ( पू० ति = इ, शे० स्प० ) ॥ १९ ॥**

भियो भावीहौ—ञिभी भये, भीधातोर्भा वीह इत्यादेशौ स्त । भाइ, वीहइ । प्रयोगानुसारात् क्तप्रत्यये बीहादेशो वा । वीहिओ, भीओ । भीत ॥ १९ ॥

भियो-इति । भी धातु को भा, वीह ये दो आदेश होते हैं । भाइ, वीहइ । स्पष्ट है । प्रयोगानुकूल क्तप्रत्यय के परे वीह आदेश विकल्प से होगा । 'क्ते' इससे इकार, वीहिओ । पक्ष में-भीओ ॥ १९ ॥

## जिघ्रतेः पापाऔ[4] ॥ २० ॥

---

१ चकार—चक्रे, । कृतम् , कृतवान् , अकार्षीत्-अकृत, करिष्यति-करिष्यते, कृत्वा, कर्तुम, कर्तव्यमित्यादि । । २. स्मरति—स्मृणोति । । ३ बिभेति—बिभीते । ४ नेद सूत्र सजीवन्यादिषु ।

घ्रा गन्धग्रहणे, अस्य धातो पा, पाअ इत्यादेशौ भवत । पाइ, पाअइ ( स्प० ) ॥ २० ॥

## म्लै वावाऔ ॥ २१ ॥

म्लै हर्षक्षये, अस्य धातोर्वा—वाऔ भवत । वाइ, वाअइ[1] ( पू० स्प० ) ॥ २१ ॥

म्लो वा वाआ[2]—म्लैधातोर्वा वाअ इत्यादेशौ भवत । वाइ, वाअइ । म्लायति । 'अनदन्तानामद् वा' इत्यकरागमेनैव वाअइ इति सिद्धे, वाअ इत्यादेश प्रपञ्चार्थ ॥२१॥

म्लो वा इति । म्लै धातु को वा वाअ, ये दो आदेश होते हैं । वाइ, वाअइ । म्लायतीत्यर्थ । 'अनदन्तानाम् अद्वा' इससे अकारागम हो जाने से वाअइ इत्यादि हो जायगा, फिर सूत्र में वाअग्रहण प्रपञ्चार्थ है ॥ २१ ॥

## तृपस्थिपः ॥ २२ ॥

तृप् तृप्तौ, अस्य धातोस्थिपो भवति । थिपइ[3] (पू० स्प० ) ॥ २२ ॥

तृपस्थिप्प[4]—तृप्धातो थिप्प इत्यादेश स्यात् । तृप् प्रीणने, थिप्पइ । थिप्पन्तो, थिप्पमाणो । तृप्यति । तृप्यन्, तृप्यमाण ॥ २२ ॥

तृप इति । तृप धातु को थिप्प आदेश हो । तृप धातु तृप्त करने के अर्थ में है । थिप्पइ । तृप्यति । शतृ में 'न्तमाणौ शतृशानचो' न्त-माण, शतृप्रत्यय को होंगे । थिप्पन्तो, थिप्पमाणो ॥ २२ ॥

## ज्ञो जाणमुणौ ॥ २३ ॥

ज्ञा अवबोधने, अस्य धातोर्जाण—मुणौ भवत । जाणइ, मुणइ[5] । ( पू० स्प० ) ॥ २३ ॥

ज्ञो जाणमुणौ—ज्ञाधातो जाण मुण इत्यादेशौ भवत । ज्ञा अवबोधने । जाणइ, मुणइ । जानाति । जाणह, जाणित्था । मुणह, मुणित्था । 'म्रज्ञा–दिनेह सूत्रेण ज्ञो ण इत्यपि दृश्यते ।' णाइ, जानाति ॥ २३ ॥

ज्ञो इति । ज्ञा धातु को जाण मुण आदेश हों । ज्ञाधातु जानने के अर्थ में है । जाण एव मुण आदेश होने पर—जाणइ, मुणइ । जानातीत्यर्थ । 'म्नज्ञपञ्चा०' ३।४३ से णकारादेश । 'अडादेशा बहुलम्' से आकार अथवा अकारागम, 'सन्धौ अज्लोप' से दीर्घ, णाइ ॥ २३ ॥

## ( घटेर्गढः । )

घटेर्गढ[6]—घटधातोर्गढ इत्यादेश स्यात् । घट चेष्टायाम् । गढइ । घटते ॥

घटेरिति । घटधातु को गढ आदेश हो । गढइ । घटते । स्पष्ट है ॥

---

१ म्लायति । २ सजीवनीसमत पाठ । ३ तृप्यति–तृप्नोति—तृपति—तृप्यति । ४ सजीवनीसमत पाठ । ५ जानाति । ६ इत आरभ्य 'पिबतेर्घोट:' इति यावत् सप्त सूत्राणि न सन्ति भामहवृत्तौ ।

## ( समो गलः । )

समो गल —समुपसर्गात् परस्य घटधातो गल इत्यादेश स्यात् । सगलइ । सघटते ॥

समो-इति । सम् उपसर्ग-पूर्वक घटधातु को गल आदेश हो । सगलइ । सघटित होता है ॥

## ( स्रसो ल्हसः । )

स्रसो ल्हस —स्रस इत्यस्य ल्हस इत्यादेश स्यात् । स्रसु अध पतने । ल्हसइ । स्रसते ॥

स्रसो-इति । स्रस् धातु को ल्हस आदेश हो । स्रस् धातु नीचे गिरने के अर्थ में है । ल्हसइ । स्रसते । नीचे गिरता है ॥

## ( नेः सदः सज्जः । )

ने सद सज्ज —नेरुपसर्गात्परस्य सद्धातो सज्ज इत्यादेश स्यात् । षद्लृ विशरणगत्यवसादनेषु । निसज्जइ । निषीदति ॥

ने सद इति । निर् उपसर्ग से पर सद् धातु को सज्ज आदेश हो । निसज्जइ । बैठता है ॥

## ( आङो रभेर्ढवः । )

आङो रभेर्ढव —आङ्पूर्वकस्य रभ्धातो ढव इत्यादेश स्यात् । आढवइ, आढवेइ । आरभते । आढविअ । आरब्धम् । कथ तर्हि 'आढत्त' आरब्धमिति ? उच्यते । 'क्तेन दिण्णादय ' इति निपातनात् आढत्तादेश ॥

आङो-इति । आङ्पूर्वक रभ धातु को ढव आदेश हो । आढवइ । आरभते । क्त-प्रत्यय के परे उक्त सूत्र से ढव आदेश । 'क्ते' सूत्र से इकार । 'कगचज॰' से तलोप । आढविअ । क्तप्रत्यय में 'आढत्त' कैसे होता है ? यह प्रश्न है—'क्तेन दिण्णादय ' इससे निपात से 'आ रभ्-त' इस समुदित को आढत्त आदेश हो जायगा । आढत्त । आरब्धमित्यर्थ ॥

## ( उदि शलेः थल्लो वा । )

उदि शले थल्लो वा—उद् उपसर्गात् परस्य शलधातो थल्ल इत्यादेश स्यात् । शल आशुगतौ । उत्थल्लइ । पक्षे-उच्छलइ । उच्छलति ॥

उदीति । उत्-उपसर्गपूर्वक शल धातु को थल्ल आदेश विकल्प से हो । शल धातु जल्द चलने के अर्थ में है । थल्ल आदेश । 'उपरि लोप कगडतद॰' से तकारलोप । 'शेषादेश॰' से थकारद्वित्व । 'वर्गेषु युज॰' से थ को त । उत्थल्लइ, एव-उच्छलइ । उच्छलतीत्यर्थ ॥

## ( पिबतेर्घोटः । )

पिबतेर्घोट —पाधातो वा घोट इत्यादेश स्यात् । पा पाने । घोट्टइ । पक्षे—पिबइ । पिबति ॥

पिबतेरिति। पाधातु को विकल्प से घोट आदेश हो। पाधातु पीने के अर्थ में है। घोटइ जलं। पानी घुटकता है। पक्ष में-पिबइ। वलोप होने से-पिअइ। पिबतीत्यर्थ ॥

जल्पेर्लो मः ॥ २४ ॥

**जल्प व्यक्तायां वाचि, अस्य धातोर्लकारस्य मकारो भवति। जम्पइ[1] ॥**

जल्पेर्लो म —जल्पधातोर्यो लकारस्तस्य स्वररहितो म स्यात्। सूत्रे 'म' इति आरः उच्चारणार्थ। जल्प व्यक्तायां वाचि। जपइ। जल्पति। जपिरो। जपिऊण ॥२४॥

जल्पेरिति। जल्पधातु के लकार को स्वर रहित मकार हो। 'म' इसमें अकार उच्चारणार्थ है। स्पष्ट बोलने के अर्थ मे जल्प धातु है। लकार को मकार। 'मो बिन्दु' से अनुस्वार। जंपिइ, जल्पति। जंपिरो। 'तृण इर शील' से इर। जंपिरो-जल्पिता। जल्पी, बकवादी। जंपिऊण, जल्पित्वा। 'क्त्वा तूण' से तूण। 'कगचज' से तलोप। 'शेषाणामदन्तता' से अकार। 'ए च क्त्वा०' से इकार। अन्य कार्य पूर्ववत् ॥ २४ ॥

ष्ठाध्यागाना ठाअ-झाअ-गाआः ॥ २५ ॥

**ष्ठा गतिनिवृत्तौ, ध्यै चिन्तायां, गै शब्दे—एतेषां ठाअ, झाअ, गाअ इत्येत आदेशा भवन्ति। ठाअन्ति, झाअन्ति, गाअन्ति[2] ॥ २५ ॥**

ष्ठाध्यागानां ठाअ झाअ गाआ —ष्ठा गतिनिवृत्तौ ध्यै चिन्तायाम्, गै शब्दे, इत्येतेषां त्रयाणां क्रमात् ठाअ, झाअ, गाअ इत्यादेशा भवन्ति। ठाअइ-तिष्ठति। झाअइ-ध्यायति। गाअइ गायति। ठाइअ-स्थित्वा। 'असमासे अ आदेश क्त्वे यस्य प्रवर्तते'। एव-झाइअ, गाइअ इत्यादय ॥ २५ ॥

स्थाध्येति। स्था ध्या गा इन धातुओं को क्रम से ठाअ, झाअ, गाअ ये आदेश होते है। स्था को 'ठाअ' आदेश। 'ठाअइ' इत्यादिक समान है। असमासे इति। समास के बिना भी क्त्वा को 'अ' आदेश होता है। इससे क्त्वा को 'अ' आदेश। 'ए च क्त्वा०' से 'ठाअ' आदेश के अकार को इकार। ठाइअ=स्थित्वा। झाइअ=ध्यात्वा। गाइअ= गात्वा ॥ २५ ॥

ठाझागाश्च वर्तमानभविष्यद्विध्याद्येकवचनेषु ॥ २६ ॥

**ष्ठाध्यागानां ठा, झा, गा इत्यादेशा भवन्ति, चकारात् पूर्वोक्ताश्च वर्तमानभविष्यद्विध्याद्येकवचनेषु परत। ठाइ, ठाअइ। ठाहिइ, ठाअहिइ। ठाउ, ठाअउ। झाइ, झाअइ। झाहिइ, झाअहिइ। झाउ, झाअउ। गाइ, गाअइ। गाहिइ, गाअहिइ। गाउ, गाअउ[3] ॥ २६ ॥**

ठाझागाश्च भविष्यद्वर्तमानविध्याद्येकवचने—भविष्यद्वर्तमानविध्यादि सम्बन्धिन्येकवचने परत ष्ठा-ध्या-गा इत्येतेषां त्रयाणां क्रमात् ठा, झा, गा इत्येते त्रय आदेशा भवन्ति। चकारात् पूर्वोक्ता ठाअ-झाअ-गाअ इत्यपि भवन्ति। ठाहिइ, ठाअहिइ। स्थास्यति, स्थेयात्, स्थाता। त्रिष्वपि भविष्यत्सु एवम्। एव झाहिइ,

---

[1] जल्पति। [2] तिष्ठन्ति। ध्यायन्ति। गायन्ति। इत्यर्थः। [3] तिष्ठति—स्थास्यति—तिष्ठतु—तिष्ठेत्, एव—ध्यै-गै इत्यादीनामपि।

झाअहिइ । गाहिइ, गाअहिइ । वर्तमाने-ठाइ, ठाअइ । तिष्ठति । झाइ, झाअइ । गाइ, गाअइ । ध्यायति । गायति । विध्यादौ ठाउ, ठाअउ । झाउ, झाअउ । गाउ, गाअउ । तिष्ठतु, तिष्ठेत् । ध्यायतु, ध्यायेत् । गायतु, गायेत् । एकवचने इति किम् ? ठाअन्ति । झाअन्ति । गाअन्ति । इह बहुवचने ठा-झा-गा आदेशा न भवन्ति, किन्तु पूर्वेण ठाअ झाअ गाअ आदेशा भवन्ति । तिष्ठन्ति, ध्यायन्ति, गायन्तीत्यर्थः ॥२६॥

ठाझेति । भविष्यत् वर्तमान-विधि अर्थों में एकवचनसम्बन्धी प्रत्यय के परे उक्त धातुओं को क्रम से ठा झा गा ये आदेश होते है और चकार से पूर्वोक्त ठाअ झाअ-गाअ ये भी होते हैं । स्था को ठा आदेश । 'धातोर्भविष्यति हि' से हि । 'ततिपोरिदेतौ' से इकार । ठाहिइ । पक्ष मे-'ठाअ' आदेश। ठाअ । हिन्दू-ठहरेगा । यही तीनों लकारों के एकवचन मे होगा । मध्यमपुरुष में-तू ठहरेगा । उत्तमपुरुष मे-मै ठहरूगा । यह तीनों भविष्यदर्थों मे, लृट्-आशीर्लिङ् और लुट् मे एकसा रूप होगा । इसी प्रकार ध्या गा धातु में भी जानना । झाहिइ, झाअहिइ । ध्यास्यति, ध्येयात् , ध्याता । सर्वत्र ध्यान करेगा-यही अर्थ होगा । एव गा का भी जानना । वर्तमान अर्थ मे-ठाइ, ठाअइ । साधुत्व पूर्ववत् । विध्यादिक अर्थों में, 'उसुमु विध्या०' इससे उकार । ठा आदेश । पक्ष मे ठाअ आदेश । ठाउ, ठाअउ । तिष्ठतु, तिष्ठेत् , समानरूप । सभावनार्थक लिङ् में भी यही रूप होगा, अर्थ में वैषम्य रहेगा । ठहरे अथवा कदाचित् या सभवत ठहरेगा । सूत्र में एकवचनग्रहण क्यों ? सामान्यत सर्वत्र ठा-झा-गा आदेश हों ? उत्तर यह है कि बहुवचन में पूर्वोक्त आदेश न हों, एतदर्थ एकवचन का ग्रहण है । ठाअति । ठा आदेश नही होगा, किन्तु 'स्थाध्यागा' स प्राप्त 'ठाअ' आदेश होगा । ठाअन्ति । झाअन्ति । गाअन्ति । पूर्ववत् साधुत्व है ॥ २६ ॥

## खादिधाव्योः खाधौ ॥ २७ ॥

**खाद भक्षणे, धावु जवे, एतयोर्धात्वोः खा-धा इत्यादेशौ भवतो वर्त्तमानभविष्यद्विध्याद्येकवचनेषु । खाइ ( ७-१ ति = इ ) । खाहिइ ( ७-१२ धातो परो हि , शे० पू० ) । खाउ । धाइ । धाहिइ । धाउ[1] ( ७-१८ ति = उ, शे० स्प० ) ॥ २७ ॥**

खादिधाव्योः खा धा[2]—भविष्यति वर्तमाने विध्यादौ एकवचने परत खाद-धाव्-धात्वो यथासख्य खा, धा इत्यादेशौ भवत । खाहिइ-खादिष्यति । खाइ-खादति । एवम्—धाहिइ-धाविष्यति । धाइ-धावति । तुम खासि । त्व खादसि । तुम धासि । त्व धावसि । विध्यादौ-खाउ, खादतु । धाउ, धावतु । अह खामु । अह धामु । खादानि । धावानि । 'एकत्वेऽपि भवेत् क्वापि धावतेर्धा विभाषया' । धाहिइ, धाविहिइ । धाइ, धावइ । धाउ, धावउ ॥ २७ ॥

---

१ तिष्ठति—ध्यायन्ति—गायन्ति । खादधावोलुक् ८।४।२२८ इत्यत्र बहुलाधिकारा द्वर्तमानभविष्यद्विध्याद्येकवचन एव भवति । तेनेह न भवति । खादन्ति, धावन्ति । क्वचिन्न भवति-धावइ पुरओ इति । हे० । खादति-खादिष्यति-खादतु-खादेत् । एव धावतीत्यादीनि ।
२ सजीवनासम्मत पाठ ।

खादिधाव्योरिति। भविष्यद्, वर्तमान, विधि अर्थ में एकवचन के परे खाद, धाव धातुओं को क्रम से अर्थात् भक्षणार्थक खाद् धातु को खा, एव गत्यर्थक-शुद्धयर्थक धाव् धातु को धा आदेश हो। खाहिइ। साधुत्व पूर्ववत् जानना। तुम 'खासि' 'सिप्थासो सिसे' इस सूत्र से सि आदेश। पूर्वोक्तसूत्र से खाद् को खा आदेश। खासि। खादसि। एव-धासि। धावसि। विध्यादिक के एकवचन में 'उसुमु विध्या०' इससे प्रथमपुरुष मे उ, मध्यमपुरुष में सु, उत्तमपुरुष में मु होंगे। सो खाउ, स खादतु। वह खाय। तुम खासु। त्व खाद। अह खामु। अह खादानि। इसी प्रकार धाव् को धादेश मे भी जानना। धाउ, धासु, धामु। एकत्वे इति। कहीं पर एकवचन में धाव् धातु को 'धा' आदेश विकल्प से हो। तो जहाँ धा आदेश होगा वहाँ 'धाहिइ' होगा, परन्तु पक्ष मे-'शेषाणा०' से अकारान्तत्व। धावइ, धावउ। 'ए च क्त्वा' से इकार। धाविहिइ ॥ २७ ॥

## ग्रसेविसः ॥ २८ ॥

**ग्रसु-ग्लसु अदने, अस्य धातोर्विसो भवति। विसइ[1] ( ७-१ ति = इ, स्प० ) ॥ २८ ॥**

**ग्रसेविस**—ग्रसे विस इत्यादेश स्यात्। ग्रसु अदने। विसइ। ग्रसते। अम्हे विसिस्सामो, विसिहामो वा। वय ग्रसिष्यामहे ॥ २८ ॥

**ग्रसेरिति। ग्रसधातु को विस आदेश हो। ग्रस धातु भोजन करने के अर्थ में है। विसइ। ग्रसते। विसिस्सामो। 'न्तिहेत्था०' से मो आदेश। 'उत्तमे स्सा हा' से 'स्सा'-'हा'-विकरण। 'ए च क्त्वा०' से इकार। विसिस्सामो, विसिहामो। पक्ष मे-विसिहिमो-ग्रसिष्यामहे ॥ २८ ॥**

## चिञश्चिणः ॥ २९ ॥

**चिञ् चयने, अस्य धातोश्चिणो भवति। चिणइ[2] ( स्प० ) ॥ २९ ॥**

**चिञश्चिण**—चिञ इत्यस्य चिण इत्यादेश स्यात्। चिञ् चयने। चिणेइ, चिणइ। चिनोति। 'आदिश्यते चिञो धातोश्चेय इत्येष वा क्वचित्'। उच्चेअइ, उच्चिनोति। पक्षे-उच्चिणइ। उच्चेअउ, उच्चिणेउ, उच्चिणिउ। उच्चेतुम् ॥ २९ ॥

**चिञ इति। चिञ्धातु चयन-इकट्ठे करने के अर्थ में है। चिञ् को चिण आदेश हो। चिणेइ। 'लादेशे वा' से एकार। पक्ष में-चिणइ, चिनोति। कहीं पर चिञ् धातु को 'चेय' यह आदेश विकल्प से होता है। उत् उपसर्ग। उच्चेअइ। पक्ष में-चिण आदेश। उच्चिणइ। उच्चेअउ। चेय आदेश। पक्ष में-चिण आदेश। 'ए च क्त्वा तुमुन्०' इससे एकार, इकार। उच्चिणेउ, उच्चिणिउ। उच्चेतुम् इत्यर्थ ॥ २९ ॥**

## क्रीञः किणः ॥ ३० ॥

**डुक्रीञ् द्रव्यविनिमये, अस्य धातो किणो भवति। किणइ[3] ( ७-१ ति = इ, स्प० ) ॥ ३० ॥**

---

१ ग्रसते-ग्लसते। २ विनोति-चिनुते। ३ क्रीणाति-क्रीणीते।

क्रीञ किण —क्रीञ किण इत्यादेश स्यात् । डुक्रीञ् द्रव्यविनिमये । किणइ, किणए । क्रीणाति-क्रीणीते । क्ते परत -किणिअ-क्रीतम् ॥ ३० ॥

**क्रीञ इति । क्रीञ्धातु को किण आदेश हो । क्रीधातु-एक वस्तु, द्रव्य अथवा पदार्थ देकर दूसरी वस्तु को लेने के अर्थ में है । 'ततिपोरिदेतौ' से इकार, एकार । किणइ, किणए । क्रीणाति । खरीदता है । क्तप्रत्यय में 'क्ते' से इकार । किणिअ, क्रीतम् ॥**

## वेः क्के च ॥ ३१ ॥

**वेरुत्तरस्य क्रीञ क्के आदेश किणादेशश्च भवति । विक्केइ, विक्किणइ ( पू० स्प० ) । विक्रीणीते ॥ ३१ ॥**

वे के च[1]—विरित्युपसर्गात्परस्य क्रीञ के इत्यादेश स्यात् चकारात् किणादेशोऽपि । विक्केइ, विक्किणइ । विक्रीणीते । सेवादित्वात् ककारस्य द्वित्वम् ॥ ३१ ॥

**वेरिति । वि उपसर्ग से पर क्री धातु को 'के' आदेश हो । चकार से किण आदेश भी हो । 'सेवादिषु च' से ककारद्वित्व । 'लादेशे वा' से एकार । विक्केइ । पक्ष मे-विक्किणइ । विक्रीणीते । बेचता है इत्यर्थ ॥ ३१ ॥**

## उद्ध्म उद्धुमा ॥ ३२ ॥

**ध्मा शब्दाग्निसंयोगयो , अस्य धातोरुत्पूर्वस्य उद्धुमा भवति । उद्धुमाइ[2] ( ७ १ ति = इ ) ॥ ३२ ॥**

उद्ध्मो धुमा[3]—उदुपसर्गात्परस्य ध्माधातो धुमादेश स्यात् । ध्मा शब्दाग्नि सयोगयो । उद्धुमाइ, उद्धमति । सदानन्दमते धूमा इति पाठ । ततो धूमाइ-इति ॥

**उद्ध्मो इति । उत् उपसर्ग से पर ध्मा धातु को धुमा आदेश हो । ध्माधातु शब्द और अग्निसयोग के अर्थ में है । उद्धुमाइ । सदानन्द 'धूमा' आदेश मानते है । अत उनके मत से उद्धूमाइ यह दीर्घ-ऊकारयुक्त होगा ॥ ३२ ॥**

## श्रदो धो दहः ॥ ३३ ॥

**श्रच्छब्दादुत्तरस्य डुधाञ् धारणपोषणयो, अस्य धातोर्दहादेशो भवति । सद्दहइ ( २-४३ श् = स, ३-३ रलोप, ३-१ त्लोप, ३-५० दद्वि०, ७-१ त = इ ) । सद्दहिअं[4] ( सद्दहेति पूर्ववत् , ७-३२ अ = इ, २-२ तलोप , ५-३० सोर्बि० ) ॥ ३३ ॥**

श्रदो धो दह —श्रद परस्य धा-धातो दह इत्यादेश स्यात् । सद्दहइ । श्रद्धाति । सद्दहिअ । सेवादित्वात् दकारस्य द्वित्वम् । श्रद्धितम् ॥ ३३ ॥

**श्रदो-इति । श्रद् से पर 'धा' धातु को दह आदेश हो । 'सर्वत्र लवराम्' से रेफ लोप । 'शषो स ' से सकार । 'सेवादौ च' से दकारद्वित्व । 'अन्त्यस्य हल ' से श्रद् के दकार का लोप । सद्दहइ । श्रद्धाति । श्रद्धा करता है । सद्दहिअ में 'क्ते' से इकार । श्रद्धितम् ॥ ३३ ॥**

---

१ सजीवनीसमत पाठ । २ उद्धमति । ३ श्रद्धते । श्रद्धितम् । ४ सजीवनी समत पाठ ।

## अवाद् गाहेर्वाह. ॥ ३४ ॥

**गाहू विलोडने, अस्य धातोरवादुत्तरस्य वाहादेशो भवति। ओवाहइ[1] ( ४-२१ अव = ओ, ७-१ ति = इ, शे० स्प० )। पक्षे[2]—अववाहइ ( प्रायोग्रहणात् २-२ वलोपो न, शे० स्प० ) ॥ ३४ ॥**

अवाद् गाहेर्वाह —अवोपसर्गात् परस्य गाहे वाहादेश स्यात्। ओवाहइ, अववाहइ। अवादिति किम्? गाहइ ॥ ३४ ॥

अवादिति। अव उपसर्ग से पर गाहधातु को वाह आदेश हो। गाह धातु मथने में मझाने अर्थ में है। 'ओदवापयो' से अव को ओकार। पक्ष मे-अववाहइ। अवगाहते। केवल धातु को वाहादेश न हो, किन्तु अवोपसर्ग में ही हो-अत अवग्रहण है। गाहइ, गाहते। यहाँ वाहादेश नहीं होगा ॥ ३४ ॥

## कासेर्वासः ॥ ३५ ॥

**अवादित्यनुवर्त्तते। कासृ शब्दकुत्सायाम्, अस्य धातोरवादुत्तरस्य वासो भवति। ओवासइ, अववासइ[3] ( ४-२१ अव = ओ, शे० पू० स्प० ) ॥ ३५ ॥**

काशेर्वास[4]—अवोपसर्गात्परस्य काशृ दीप्तावित्यस्य वास इत्यादेश स्यात्। ओवासइ अववासइ, ओवासए अववासए। अवकाशते। ओवासिउ, अववासिउ। अवकाश्य। 'वाशब्दस्य उ आदेश क्त्वास्थितस्य क्वचिद् भवेत्'। इति उ-आदेश। अवादिति किम्? कासइ ॥ ३५ ॥

काशेरिति। काशृ-धातु दीप्ति अर्थ में है। अव उपसर्ग से पर काश् धातु को वास आदेश हो। 'ओदवापयो' से ओकारादेश। ओवासइ। पक्ष में-अववासइ। 'ततिपो०' से एकार होने से ओवासए, अववासए। अवकाशते इत्यर्थ। क्त्वाप्रत्यय के विषय में 'कगचज०' से तकारलोप। क्त्वाप्रत्ययसम्बन्धी 'वा' को कही उ आदेश हो। इससे उ आदेश। उक्त सूत्र से वास आदेश। पूर्ववत् ओकार। ओवासिउ। 'ए च क्त्वा०' से इकार। ओकारादेश के पक्ष में। अववासिउ। अवग्रहण सूत्र मे क्यों? जिससे केवल को वास आदेश न हो। कासइ, काशते ॥ ३५ ॥

## निरो माङो माणः ॥ ३६ ॥

**माङ् माने, अस्य धातोर्निरुत्तरस्य माणादेशो भवति। णिम्माणइ[5] ( ३-३ र्लोप, ३-५० मद्वि०, शे० पू० ) ॥ ३६ ॥**

**निरो माङो माणमवौ[6]**—निरुपसर्गात् परस्य माङ माण-मव इत्यादेशौ स्त। माङ्माने। निम्माणेइ, निम्माणइ, निम्माणए। निम्मवए, निम्मवेइ, निम्मवइ। निर्मिमीते। ननु कथ सम्माणेइ ( सम्मानयति )? मान पूजायामिति धात्वन्तरस्य

---

१ अवगाहते। २ ओत्वाऽभावपक्षे इत्यथ। ३ अवकासते। ४ सजीवनीसमत पाठ। ५ निर्मिमीते। ६ सजीवनीसमत पाठ।

तत् । 'निर परस्य माङो वा स्याता मणमरौ क्वचित्' । निम्मणिऊण । निम्मारिउण । 'अडादेशा बहुलम्' इति आत्वम् । सर्वत्र 'ए च क्त्वा' इति इत्वम् एत्व च । निम्मणेऊण निम्मारेऊण । निम्मणिऊण, निम्मारिऊण । निर्माय ॥ ३६ ॥

निर इति । निर उपसर्ग से पर माङ्धातु को 'माण' 'मव' आदेश हों । माङ-धातु मान अर्थ मे है । माण आदेश । 'सवत्र लवराम्' से रेफलोप, 'शेषादेशयो०' से मकारद्वित्व । 'लादेशे वा' से एकार । निम्माणेइ, निम्माणइ । 'ततिपो०' से एकार । पक्ष मे-निम्माणए । इसी प्रकार मव आदेश मे भी जानना । 'सम्माणेइ' यहाँ सपूर्वक मे मान आदेश कैसे ? उत्तर—यहाँ माङ्धातु नही है, किन्तु मानधातु है । निर इति । निर से पर माधातु को कही मण, मर आदेश विकल्प से हों । निम्मणिऊण । 'ए च क्त्वा०' से इकार, एकार । निम्मारिऊण मे 'अडादेशा बहुलम्' से आकार । एव निम्मारिऊण । निर्माय ॥ ३६ ॥

## ( पदेर्व्वलः । )

पदेर्व्वल[1]—निरुपसर्गात् परस्य पद गतौ, इत्यस्य वलादेश स्यात् । निव्वलइ । निष्पद्यते ॥

पदेरिति । निर उपसर्ग से पर पद धातु को वल आदेश हो । पूर्ववत् रेफलोप, वकारद्वित्व । निव्वलइ । निष्पद्यते ॥

## क्षियो झिज्ज' ॥ ३७ ॥

**क्षि क्षये, अस्य धातोर्झिज्जो भवति । झिज्जइ[2] ( स्पष्टम् ) ॥ ३७ ॥**

क्षियो झिज्ज —क्षि क्षये, इत्यस्य झिज्ज इत्यादेश स्यात् । झिज्जइ । क्षीयते ॥ ३७ ॥

क्षिय इति । क्षि धातु क्षय के अर्थ में है । क्षि धातु को झिज्ज आदेश हो । झिज्जइ, क्षीयते ॥

## भिदिच्छिदोरन्त्यस्य न्दः ॥ ३८ ॥

**भिदिर्[3], छिदिर्[4] एतयोरन्त्यस्य न्दो भवति । भिन्दइ । छिन्दइ[5] ( ४-१७ वर्गान्त, ७-१ ति = इ ) ॥ ३८ ॥**

भिदिच्छिदोरन्त्यस्य न्द —भिदिर् विदारणे, छिदिर् द्वैधीकरणे, अनयोर्धात्वोर्योऽन्त्यो वर्ण तस्य न्द इत्यादेश स्यात् । भिन्दइ, भिनत्ति । छिन्दइ, छिनत्ति । तुम भिन्दसु । त्व भिन्धि । छिन्दसु, छिन्धि । 'त्त इति क्वचिदादेशो विकल्पेन भिदिच्छिदो ।' भेत्तूण, छेत्तूण । भित्त्वा, छित्त्वा । अडादेशा बहुल'मिति इकारस्य एकार । पक्षे—भिन्दिऊण, छिन्दिऊण । 'ए च क्त्वा०' इत्यादिना इत्वम्, एत्व च । भिन्देऊण, छिन्देऊण ॥ ३८ ॥

भिदीति । फाडदेना इस अर्थ में भिद, फाडकर दो टुकडे कर देना अथवा चीर देना इस अर्थ मे छिद् । इन धातुओं के अन्त्य वर्ण को अर्थात् दकार को न्द आदेश

---

१ इद सूत्र भामहवृत्तौ नास्ति । २ क्षिणोति, क्षयति । ३ पूर्वापरशैलीदर्शनात ( विदारणे ) इत्यर्थनिर्देशो लेखकभ्रमात्त्रटित स्याद् इति प्रतीयते । ४ अत्रापि ( छेदने ) इत्युचित । ५ भिनत्ति, भिन्ते । छिनत्ति, छिन्ते ।

हो। भिन्दइ, भिनत्ति। लोट् मध्यमपुरुष एकवचन में 'उसुमु विध्या०' से सुआदेश, भिन्दसु, भिन्धि। एव छिन्दसु, छिन्धि। त्त इति। भिद् छिद् धातु को कहीं विकल्प से द को त्त आदेश हो। 'क्त्व तूण' से तूण आदेश। 'कगचज०' से तलोप। 'अडादेशा बहुलम्' से एकार। भेत्तूण, छेत्तूण। पक्ष में-'ए च क्त्वा' से एकार, इकार। भिन्दऊण, भिन्दिऊण। भित्त्वा। एव छिद् धातु में भी रूप होंगे। छित्त्वा॥ ३८॥

## क्थेर्ढः ॥ ३९ ॥

**क्थ निष्पाके, अस्य धातोरन्त्यस्य ढो भवति। कढइ[1] ( पू० स्प० )॥**

**क्थेढ**—क्थ धातोरन्त्यस्य ढ स्यात्। क्थ निष्पाके। कढइ, कढए। 'खघथधे' त्यस्य बाध। क्थयति। 'क्वचित् क का प्रत्ययस्येह उआण इत्यपीष्यते'। कढुआण। 'सन्धावज्लोप०' इति अकारलोप। क्थित्वा॥ ३९॥

क्थेरिति। क्थधातु के अन्त्य वर्ण को ढकार हो। क्थ धातु पकाकर अष्टमांश अवशिष्ट रखना = काढा करने के अर्थ में है। कढइ, कढए। क्थयति। क्थ धातु से पर क्त्वाप्रत्यय को कहीं 'उआण' आदेश होता है। 'सन्धावज्लोप०' से अकारलोप। कढुआण। क्थित्वा॥ ३९॥

## वेष्टेश्च[2] ॥ ४० ॥

**वेष्ट् वेष्टने, अस्य धातोरन्त्यस्य ढो भवति। वेड्ढइ[3] (ष्ट् = ढ, आदेशत्वात् ३-५० ढद्वि०, ३—५१ ढ् = ड्, ७—१ ति = इ)। योग विभाग उत्तरार्थ ॥ ४०॥**

**वेष्टेश्च**—वेष्ट वेष्टने, इत्यस्य योऽन्त्यो वर्णस्तस्य ढ स्यात्। वेढइ, वेढए। वेष्टते। योगविभाग उत्तरार्थ॥ ४०॥

**वेष्टेश्चेति**। बिस्तरादि के लपेटने के अर्थ मे विद्यमान वेष्ट धातु के अन्त्य वर्ण ष्ट को ढ आदेश हो। वेढइ। 'ततिपो' से इकार, एकार। वेढए। वेष्टते। योगविभाग पृथक् पृथक् दो सूत्र पढ़ना, उत्तरार्थ = अग्रिम सूत्र में केवल वेष्ट की ही अनुवृत्ति के लिये है॥ ४०॥

## उत्समोर्लः ॥ ४१ ॥

**उत्सम्भ्यामुत्तरस्य वेष्टेरन्त्यस्य लो भवति। उव्वेल्लइ, सवेल्लइ[4] (३-१ तलोप, ३-५० वद्वि०, ष्ट = ल, आदेशत्वात् ३-५० लद्वि०, शे० पू०)॥ ४१॥**

**उत्समोर्ल्ल**—उत्पूर्वस्य सपूर्वस्य च वेष्टेरन्त्यवर्णस्य 'ल्ल' इत्यादेश स्यात्। उव्वेल्लइ। उद्वेष्टते। सवेल्लइ। सवेष्टते। 'शेषादेशयो०' इति द्वित्वेन द्विलकारे सिद्धे पुनर्द्विलकारविधान क्वचिदन्त्यस्यादेशे न द्वित्वम्। तेन, वेढइ-इत्यादि सिद्धम्। अत्र सयुक्तस्य ष्ट-इत्यस्य ढकारादेशे न द्वित्वम्॥ ४१॥

---

१ क्थयति। २ क्वचित् चकारात् ठो भवति, टश्च। वेढइ, वेठइ, वेटइ-इत्युदाहरणानि-इत्यधिक। ३ वेष्टते। ४ उद्वेष्टते, सवेष्टते।

उत्समोरिति। उत्पूर्वक, सपूर्वक वेष्टधातु के अन्त्य वर्ण 'ष्ट' को द्विलकारात्मक ल्ल आदेश हो। उव्वेल्लइ। 'उपरि लोप कगडतद०' इससे दलोप। 'शेषादेशयो०' से वकारद्वित्व। उद्वेष्टते। एव सवेल्लइ, सवेष्टते। प्रश्न यह है कि एक लकारात्मक 'ल' आदेश पढना था, 'शेषादेशयो०' से ल को द्वित्व करने से द्विलकारात्मक हो जाता। फिर द्विलकारात्मक 'ल्ल' आदेश ग्रहण व्यर्थ होकर यह सूचित करता है कि—सयुक्त वर्ण के स्थान मे विहित अन्त्य वर्ण आदेश को द्वित्व नही होता है। अत वेढइ में 'ढ' को द्वित्व न होगा॥ ४१॥

## रुदेर्वः ॥ ४२ ॥

**रुदिर् अस्य धातोरन्त्यस्य वो भवति। रुवइ[1] (इरित्, द् = व्, ७-१ ति = इ)॥ ४२॥**

रुदो व[2]—रुदोऽन्त्यस्य दस्य व स्यात्। रुवइ। केचित्तु-रोवइ, इत्युदाहरन्ति। तन्मते 'अडादेशा बहुल'मिति उकारस्य ओकार। रुइरा। 'तृन इर शीले' इति इर। 'आदीतौ बहुल'मिति आप्रत्यय। रोदनशीला॥ ४२॥

रुदो व इति। रुद्धातु के अन्त्य दकार को वकार आदेश हो। रुवइ। रोदिति। कोई आचाय रोवइ प्रयोग करते है, उनके मत से 'अडादेशा बहुलम्' से उकार को ओकार होगा। रुइरा। 'तृन् इर शीले' से इर। 'कगचज०' से वलोप। 'सन्धौ अज्लोप०' से अकारलोप। 'आदीतौ बहुलम्' से आकारप्रत्यय। 'क्वचिदपि लोप' से अलोप। रोदनशीला॥ ४२॥

## उदो विजः ॥ ४३ ॥

**उत्पूर्वस्य विजेरन्त्यस्य वकारो भवति। उव्विवइ[4] (२-२ तलोप, ३-५० वद्वि०, शे० पू० स्प०)॥ ४३॥**

उदो विजे[3]—उदुपसर्गात्परस्य विजेरन्त्यवर्णस्य वकार स्यात्। उव्वेवइ, उव्वेवए। 'अडादेशा बहुल'मिति एकार। उद्विजते॥ ४३॥

उद इति। ओविजी भयचलनयो, उत् उपसर्ग से पर भयचलनार्थक विज धातु के अन्त्य वर्ण को वकार हो। इससे व आदेश। 'अडादेशा बहुलम्' से एकार। 'उपरि लोप कगड' से दलोप। 'शेषादेशयोर्द्वित्व०' इससे वकार को द्वित्व। उव्वेवइ। 'ततिपो०' से ए। उव्वेवए। उद्विजते॥ ४३॥

## वृधेर्ढः ॥ ४४ ॥

**वृधु वर्धने, अस्य धातोरन्त्यस्य ढो भवति। वड्ढइ[5] (१-२७ ऋ अ, ध् = ढ, तस्य आदेशत्वात् ३-५० द्वि०, शे० पू०)॥ ४४॥**

वृधेर्ड्ढ—वृधेरन्त्यस्य धस्य ड्ढ स्यात्। ऋतोऽत्। वड्ढइ, वड्ढए। वर्धते॥४४॥

वृधेरिति। वृध वृद्धौ, वृधधातु के अन्त्य को 'ड्ढ' होय। 'ऋतोऽत्' से अकार। वड्ढइ। वर्धते॥ ४४॥

---

१ रोदिति। २ सजीवनीसमत पाठ। ३ उद्विजते। ४ सजीवन्यादिसमत पाठ। ५ वर्द्धते।

## हन्तेर्म्मः ॥ ४५ ॥

**हन्तेरन्त्यस्य म्मो भवति। हम्मइ[1] ( स्पष्टम् ) ॥ ४५ ॥**

हन्तेर्म्म —हिंसागत्यर्थकस्य हन् धातोरन्त्यवर्णस्य म्म इत्यादेश स्यात्। हम्मइ, हम्मए। हन्यते। कर्तरि तु नायमादेश। तथा चोक्तम्— क्वचित्तु हन्तेर्म्म इति आदेशो नेष्यते बुधै'। हणइ—हन्ति। हन्तव्व-हन्तव्यम्। हतूण-हत्वा। हओ-हत। 'खने क्वापि म्म इत्येष स्यादन्त्यस्य हनेरिव।' खम्मइ। खायते, खन्यते। 'नान्त्यद्वित्वे' इति इअइज्जयोरभाव। क्वापीति वचनादिह न भवति। खणिअइ, खणिज्जइ। हणिअइ, हणिज्जइ ॥ ४५ ॥

हन्तेरिति। हिसा-गत्यर्थक हन्धातु के अन्त्य वर्ण को 'म्म' यह आदेश हो। हम्मइ। यह 'म्म' आदेश कर्ता अर्थ में नही होता है। कहा भी है—'क्वचिदिति'। हन् धातु को म्म' आदेश कहीं कहीं नहीं भी होता है। हणइ। 'शेषाणामदन्तता'। 'नो ण'। हणइ। हन्ति। क्वचिद्-ग्रहण से कर्त्रर्थक प्रत्यय के अतिरिक्त भी होता है। जैसे हतव्व, हतूण—इत्यादि। साधुत्व पूर्ववत्। 'खनेरिति'। खन्धातु के अन्त्य को 'म्म' यह आदेश हन्धातु के सदृश होता है। खम्मइ। 'नान्त्यद्वित्व' से इअ-इज्ज का निषेध हो जायगा। खायते, खन्यते इत्यर्थ। क्वापि ग्रहण है, इससे कहीं कहीं 'म्म' आदेश नही भी होगा। यक्प्रत्यय को 'यक इअइज्जौ' से इय। खणिअइ। हणिअइ। 'नो ण'। खन्यते, हन्यते। एव खणिजइ, हणिज्जइ मे इज्ज आदेश होगा ॥ ४५ ॥

## रुषादीना दीर्घता ॥ ४६ ॥

**रुषादीना दीर्घता भवति। रूसइ। तूसइ। सूसइ ( २-४३ ष = स, एवं सर्वत्र, शे० स्प० पू० )। रुष्यति। तुष्यति। शुष्यति ॥ ४६ ॥**

रुषादीना दीर्घ[2]—रुष रोषे, रुष-इत्यादीना धातूनाम् उपधाया उकारस्य दीर्घ स्यात्। रूसइ, रूसेइ, रूसए। रुष्यति। सूसइ सूसेइ। शुष्यति। 'रुषादीना'मिति किम्? रुवइ। रोदिति ॥ ४६ ॥

रुषेति। रुषादिक धातुओं के उपधाभूत उकार को दीर्घ होता है। इससे दीर्घ। 'ततिपोरिदेतौ', 'शेषाणामदन्तता', 'शषो स', 'लादेशे वा' इससे विकल्प से एकार। रूसेइ, रूसइ। रुष रोषे। रुष्यति। एव शुष शोषणे। सूसेइ, सूसइ। रुषादिकों को दीर्घ हो यह क्यों कहते है? सामान्यत सभी उपधा के उकार को दीर्घ हो, ऐसा मानने पर रूवइ में भी दीर्घ हो जायगा ॥ ४६ ॥

## च्चो व्रजनृत्योः ॥ ४७ ॥

**व्रज, नृती, अनयोरन्त्यस्य च्चो भवति। वच्चइ[4] ( ३-३ रलोप, शे० पू० )। णच्चइ[3] (१-२७ ऋ = अ, २-४२ न् = ण, शे० स्प०, ति = इ पू०) ॥**

च्चो व्रजिनृत्यो —व्रज गतौ, नृता गात्रविक्षेपे, इत्यनयोरन्त्यवर्णस्य च्च इत्या-

१ हन्ति। २ सजीवन्यनुसारा पाठ। ३ व्रजति। ४ नृत्यति।

देश स्यात् । वच्चइ । व्रजति । णच्चइ । नृत्यति । ननु कथ 'णट्ट'मिति ? नट नृत्तावित्यस्य नाट्यमिति, तस्मादिद स्यात् ॥ ४७ ॥

च्चो-इति । गत्यर्थक व्रजधातु को, पदार्थाभिनयार्थक नृत धातु के अन्त्य वर्ण को 'च्च' यह आदेश हो । वच्चइ । 'सर्वत्र लवराम्' से रेफलोप । व्रजति । उक्त सूत्र से 'च्च' आदेश । 'नो ण ' से णकार । णच्चइ । नृत्यति । यदि नृत को सर्वत्र च्च आदेश होता है तो णट्ट यह कैसे होगा ? उत्तर—यहाँ नट नृत्तौ, नृत्यर्थक नट जातु है । 'ऋहलोर्ण्यत्', 'अत उपधाया'–एव यह नाट्यशब्द का है । 'अधो मनयाम्' से यलोप । 'शेषादेशयो ' से द्वित्व । 'नो ण सर्वत्र' से णकार । 'अदातो यथादिषु वा' से आकार को अकार । 'मो बिन्दु ' से अनुस्वार । णट्ट । नाट्यम् ॥ ४७ ॥

## युधिबुध्योर्झः ॥ ४८ ॥

**युध सम्प्रहारे, बुध अवगमने, अनयोरन्त्यस्य झो भवति । जुज्झइ । बुज्झइ[1] (ध् = झ्, आदेशत्वात् ३–५० झद्वि०, ३–५१ झ् = ज्, शे० स्प०) ॥**

युधिबुधिगृधिसिधिक्रुधा ज्झ[2]—युध्यादीनामन्त्यस्य ज्झ स्यात् । युध सप्रहारे । जुज्झइ, युध्यते । बुध अवगमने । बुज्झइ, बुध्यते । गृधु अभिकाङ्क्षायाम् । गिज्झइ, गृध्यति । सिधु स धौ । सिज्झइ, सि ध्यति । क्रुध कोपे । कुज्झइ, क्रुध्यति ॥ ४८ ॥

युधीति । युधादिक धातुओं के अन्त्य वर्ण को ज्झ आदेश हो । युध धातु मारना युद्ध करने के अर्थ मे है । ध को ज्झ आदेश । 'आदेर्यो ज ' से जकार । जुज्झइ । युध्यते । बुध् धातु समझने के अर्थ मे है । पूर्ववत्-बुज्झइ । बुध्यते । गृध धातु अत्यन्त आसक्ति चाहने के अर्थ में है । ज्झ आदेश । 'अडादेशा बहुलम्' से इकार । गिज्झइ । गृध्यति । सिध धातु मिलना, या सिद्ध करने के अर्थ में है । सिज्झइ । सिद्धयति । क्रध धातु क्रोध करने के अर्थ मे है । 'सर्वत्र लवराम्' से रेफलोप । कुज्झइ । क्रुध्यति ॥४८॥

## रुधेर्न्धम्भौ[3] ॥ ४९ ॥

**रुधिर् ( अस्य[4] धातो )रन्त्यस्य न्ध–म्भौ भवत । रुन्धइ, रुम्भइ[5] ( इरित्, ध् = पर्यायेण न्ध, म्भ, ७–१ ति = इ, ४–१७ वर्गान्त० ) ॥४९॥**

रुन्धेर्न्धम्भौ—रुध्-धातोरन्त्यस्य न्ध–म्भ इत्यादेशौ स्त । रुन्धइ, रुम्भइ । रुणद्धि । 'रुधो न्धम्भौ क्वचिन्नैव क्वचिज्झो भावकर्मणो '।'क्तेन दिण्णादय ' इति क्तेन सह रुद्धादेश, रुद्धशब्दाद् वा । रुद्धो, रुद्ध । रुज्झइ, रुध्यते ॥ ४९ ॥

रुधेरिति । रुध धातु के अन्त्य वर्ण को न्ध म्भ आदेश होते हैं । रुन्धइ । और जहाँ म्भ आदेश होगा वहाँ रुम्भइ । रुध धातु आवरण = ढकना, रूँधना, गेसना अर्थ में । रुणद्धि । कही कही रुध धातु को न्ध म्भ आदेश नहीं होते और कहीं पर भावकर्म में ज्झ आदेश होता है । क्तप्रत्यय के परे 'क्तेन दिण्णादय ' से क्तप्रत्यय के सहित

१ युद्ध्यते, बुद्ध्यते । २ मनोरमा–सञ्जीविनीमनन पाठ । ३ रुधेन्धम्भौ—धम्भइ । का० पा० । ४ अय पाठो न लभ्यते । ५ रुणद्धि, रुधे ।

रुद्ध को रुद्ध आदेश। 'अत ओत् सो' से ओ। रुद्धो। रुद्ध। लट् मे ध को ज्झ आदेश। रुज्झइ। रुध्यते॥ ४९॥

## मृदो लः॥ ५०॥

**मृद क्षालने, अस्य धातोरन्त्यस्य लो भवति। मलइ[1] (स्पष्टम्)॥५०॥**

मृदो ल—मृद क्षोदे, इत्यस्यान्त्यवर्णस्य ल स्यात्। मलइ, मलेइ। मृद्नाति॥

मृदो-इति। मृद् धातु मसलना, पीसना आदि अर्थ में है। मृद् धातु के अन्त्य वर्ण को ल आदेश हो। मलइ। मृद्नाति॥ ५०॥

## शद्लपत्योर्डः॥ ५१॥

**शद्लृ शातने, पत्लृ पतने, अनयोरन्त्यस्य डो भवति। सडइ,[2]। पडइ (शे० स्प०)॥ ५१॥**

शदि[3]पत्योर्ड—शद्लृ शातने, पद्लृ गतौ, इत्यनयोरन्त्यस्य ड स्यात्। सडइ, शीयते। पडइ, पतति। वस्तुत—शद्लृविशरणगत्यवसादनेषु, पद्लृ पतने॥५१॥

शदीति। शद् और पत् धातु के अन्त्य वर्ण को 'ड' आदेश हो। 'शषो स' से सकार। सडइ, विशीर्यते। फैलता है या नष्ट हो रहा है। पडइ। पतति। गिर रहा है॥ ५१॥

## शकादीना द्वित्वम्॥ ५२॥

**शक्लृ शक्तौ, इत्येवमादीना द्वित्वं भवति। सक्कइ (७-१ ति = इ, स्पष्टम्)। लग्गइ (७-१ ति = इ, शे० स्प०)। शक्नोति। लगति॥५२॥**

शकादीना द्वित्वम्—शक्लृ शक्तौ-इत्यादीना धातूनामन्त्यस्य द्वित्व भवति। सक्कइ, शक्नोति। सक्कइ मए। शक्यते मया। 'नान्त्यद्वित्वे' इति निषेधात् यक इय इज्जयोरभाव। लग्गइ। लग सङ्गे। मग्गइ, इद नोदाहर्तव्यम्, रेफलोपद्वित्वाभ्यामप्यस्य सिद्धे। द्वित्वेनैव यगर्थस्य प्रतीयमानत्वात् यगपि न। सक्कइ ते-शक्यते त्वया॥५२॥

शकेति। शकादिक धातुओं के अन्त्य वर्ण को द्वित्व हो। सक्कइ। समर्थ होता है। भाव में भी सक्कइ-यही होगा। क्योंकि 'नान्त्यद्वित्वे' से इय-इज्ज का निषेध। द्वित्व से ही भावकर्म की प्रतीति हो जायगी, अत यक् भी नहीं होगा। लग धातु सङ्ग में लगने के अर्थ मे है। लग्गइ। मार्ग अन्वेषणे का मग्गइ उदाहरण नही देना, क्योंकि 'सर्वत्र लवराम्' से रेफलोप। 'शेषादेशयो०' से द्वित्व। 'अडादेशा बहुलम्' से ह्रस्व होने से मग्गइ हो जायगा॥ ५२॥

## स्फुटिचल्योर्वा॥ ५३॥

**स्फुट विकसने, चल कम्पने, अनयोरन्त्यस्य वा द्वित्व भवति। फुट्टइ (३-१ सलोप, टद्वि०, ७-१ ति = इ), फुडइ (द्वित्वाभावे २-२० ट = ड, शे० पू०)। चल्लइ, चलइ[4]॥ ५३॥**

---

१ मृद्नाति। २ शीयते। पतति। ३ सजीवनीस्थ पाठ। ४ स्फोटते, स्फुटति। चलति।

स्फुटिचलोर्वा[1]—स्फुट विकसने, चल कम्पने, अनयोरन्त्यस्य वा द्वित्व स्यात् । फुट्टइ, फुडइ । स्फुटति । चल्लइ, चलइ । चलति । फुट्टो, फुडिओ । स्फुटित । चल्लिओ, चलिओ । चलित ॥ ५३ ॥

स्फुटीति । स्फुट खिलजाने के अर्थ में है, चल-काँपने मे है । स्फुट और चल के अन्त्य वर्ण को विकल्प से द्वित्व हो । 'उपरि लोप ' से सकारलोप । फुट्टइ । फूटता है । पक्ष में-'टो ड '। फुडइ । स्फुटति । फुट्टो । स्फुट्टित के स्थान मे 'क्तेन दिण्णादय ' से फुट्ट आदेश । पक्ष में-फुडिओ । स्फुटित । एव चल्लइ, चलइ । चलति । चल्लिओ, चलिओ । चलित ॥ ५३ ॥

## प्रादेर्मीलः ॥ ५४ ॥

**प्रादेरुत्तरस्य मिलोऽन्त्यस्य द्वित्वं भवति वा । पमिल्लइ[2] (स्प० पू०), पमीलइ ( ३-३ रलोप , 'ह्रस्व संयोगे' इति हेमसूत्रात् मी = मि, शे० पू० ) ( स्प० ) ॥ ५४ ॥**

प्रादेर्मील —प्रादेरुपसर्गात्परस्य मील इत्यस्य अन्त्यस्य वा द्वित्व स्यात् । मील निमेषणे । निमिल्लइ, निमीलइ । निमीलति । वाशब्दस्य व्यवस्थितविभाषितत्वात् यत्र 'अडादेशा बहुल'मिति ईकारस्य इकार , तत्रैव द्वित्वम् । तेन निमीलइ-इत्यत्र न द्वित्वम् । एवम्-पमिल्लइ, पमीलइ । प्रमीलति । समिल्लइ, समीलइ । समीलति । उम्मिल्लइ, उम्मीलइ । उन्मीलति । प्रादेरिति किम् ? मीलइ । मीलति ॥ ५४ ॥

प्रादेरिति । प्रादिक उपसर्ग से पर मील धातु के अन्त्य वर्ण को विकल्प से द्वित्व हो । मील धातु आँख की पलक लगाने के अर्थ मे है । 'अडादेशा बहुलम्' से ईकार को इकार । उक्त सूत्र से द्वित्व । निमिल्लइ । यहाँ वा-ग्रहण व्यवस्थितार्थक है । अत जहाँ 'अडादेशा बहुलम्' से इकार होगा वही द्वित्व होगा । अत पक्ष मे-निमीलइ । ह्रस्व न होने से द्वित्व भी नही होगा । एव पमिल्लइ । 'सर्वत्र लवराम्' से रेफलोप । पमीलइ । प्रमीलति । उद् मील, 'उपरि लोप ' से दलोप । 'शेषादेशयो०' से द्वित्व । अन्य कार्य पूर्ववत् । उम्मिल्लइ, उम्मीलइ । उन्मीलति । आदि ग्रहण करने से केवल धातु में द्वित्व न होगा । मीलइ । मीलति ॥ ५४ ॥

## भुजादीना क्त्वातुमुन्तव्येषु लोपः ॥ ५५ ॥

**भुज इत्येवमादीना क्त्वातुमुन्तव्येषु परतोऽन्त्यस्य लोपो भवति । भोत्तूण (जलोपे, ३-१ कलोपे, गुणे[3], ३-५० तद्वि०, ४-२३ क्त्व शेषस्य वस्य स्थाने ऊणादेश ) भोत्तु । भोत्तव्वं । विद , वेत्तूण ( दलोपे, ३-१ कलोपे, ३-५० तद्वि०, ४-२३ वा = ऊण, गुण पूर्ववत् ) । वेत्तु ( पूर्व-**

---

१ सञ्जीवन्यनुगत पाठ ।  २ प्रमीलति । ३ 'युवणस्य गुण '। ८।४।२३७ हेम सूत्रेण गुण । एवमुत्तरत्र । वस्तुतस्तु-'रुद भुज-मुचां तोऽन्त्यस्य' । ८।४।२१२-एषामन्त्यस्य क्त्वा-तुम्-तव्येषु तो भवति । एष प्रकार शोभन प्रतिभाति । 'क्त्व ऊण ' इति क्त्वा = ऊण, पुनस्तकारस्य द्वित्वादि सर्वं सुघटमिति । रोदितुम्-रोदितव्यम् ।

**वद् गुणे कृते जलोपे च शेषभूततुमुनस्तकारस्य ३-५० द्वि०, ४ १२ मबि० )। वेत्तव्वं ( ३-२ यलोप, ३-५० वद्वि०, ४-१२ मबि० )। रुद्, रोत्तूण, रोत्तु, रोत्तव्व ( भोत्तु-भोत्तव्ववत् )। ( भोत्तसावात् )॥ ५५॥**

भुजादीनां क्त्वातुमुन्तव्येषु लोपः—भुजसदृशानां धातूनां क्त्वा-तुमुन् तव्येषु परतः अन्त्यस्य लोपः स्यात्। भुज पालनाभ्यवहारयोः। 'क्त्वा तूण' इति तूण, उक्तसूत्रेण अन्त्यलोपः। सेवादिषु चे'ति तकारस्य द्वित्वम्। 'अदादेशा बहुलम्' इति ओकारः। भोत्तूण भुक्त्वा। भोत्तु भोक्तुम्। भोत्तव्व, भोक्तव्यम्। मोत्तूण, मुक्त्वा। तूणादेशे 'कगचजे'ति तलोपे, मोऊण-इत्यपरे। मोत्तु मोक्तुम्। मोत्तव्व मोक्तव्यम्। रोत्तूण, रोऊण इति वा, रुदित्वा। रोत्तु, रोदितुम्। रोत्तव, रोदितव्यम्। यथालक्ष्यमुत्प्रेक्ष्यम्॥ ५५॥

भुजेति। भुज-सदृश धातुओं के अन्त्य वर्ण का लोप हो क्त्वा-तुमुन्-तव्य प्रत्ययों के परे। भुज धातु पालन और भोजन अर्थ में है। 'क्त्वा तूण' से तूण आदेश। उक्त सूत्र से जकारलोप। सेवादिषु च' से तकारद्वित्व 'अडादेशा बहुलम्' से उकार को ओकार। भोत्तण-भुक्त्वा। इसी प्रकार भोत्तु, भोत्तव्व में भी जानना। यहाँ 'अधो मनयाम्' से यलोप। 'शेषादेशयो०' से द्वित्व विशेष है। मोत्तण। मुक्त्वा। तूणादेश में 'कगचज०' से तलोप करने पर मोऊण-कोई आचार्य मानते हैं। एव रोत्तूण, रोऊण= रुदित्वा। रोत्तु=रुदितुम्। रोत्तव=रोदितव्यम्। लक्ष्यानुकूल व्यवस्था कर लेनी चाहिये। उभय प्रकार के रूप सिद्ध हैं॥ ५५॥

## श्रुहुजिलूधुवां णोऽन्ते ह्रस्वः[1] ॥ ५६ ॥

**श्रु श्रवणे, हु दानादाने,[2] जि जये, लूञ् छेदने[3] धूञ् कम्पने, इत्येतेषामन्ते ण प्रयोक्तव्य, दीर्घस्य ह्रस्वो भवति। सुणइ ( २-४३ श् = स, ३-३ रलोप, ७-१ ति = इ, शे० स्प०)। हुणइ। जिणइ। लुणइ। धुणइ[4]। ( स्पष्टं पू० )॥ ५६॥**

श्रुहुजिलूधूनां[5] णोऽन्ते ह्रस्वश्च—श्रु इत्येवमादीनां पञ्चानां धातूनाम् अन्ते अग्रे णकारः प्रयोक्तव्यः, एषु यो दीर्घः तस्य ह्रस्वश्च स्यात्। श्रु श्रवणे। सुणइ शृणोति। हु दानादनयोः। हुणइ जुहोति। जि जये। जिणइ, जअइ। जयति। लूञ् छेदने। लुणइ, लुणेइ। अत्र ऊकारस्य ह्रस्वः। पूर्वेषु दीर्घाभावान् न ह्रस्वः। लूनाति। धूञ् कम्पने। धुणइ, धुणेइ। धूनाति। 'श्र्वादीनां यो णकारोऽन्ते स क्वचिद्वा विधीयते'। सुणिऊण, सोऊण। श्रुत्वा। हुणइ, जुहोति। हुणन्तो, जुह्वत्। जिणि-

---

१ श्रुहुजिमुधुवां णो ह्रस्वश्च। का० पा०। २ हु दानादनयोः। का० पा० ३ मुङ शब्दे इत्यधिकं मुणइ भवते। का० पा०। ४ शृणोति। जुहोति। जयति। लुनाति-लुनीते। धुनोति-धवते। इत्यादयः। ५ सजीवन्याम्मिमनः पाठः।

ऊण, जेऊण । जित्वा । लुणिअव्व, लवितव्यम् । 'श्वादिभ्य इतरस्यापि णोऽन्ते क्वचन दृश्यते' । थुणइ स्तौति । थुणिऊण, स्तुत्वा ॥ ५६ ॥

श्रुहु-इति । श्रु-हु-जि-लू-धू इन पाँच धातुओं के अन्त्य वर्ण के आगे णकार का प्रयोग हो और दीर्घ धातु को अर्थात् लू धू धातुओं को ह्रस्व हो । श्रु धातु सुनने के अर्थ मे है । सुणइ । शृणोति । सुनता है । हु धातु देने और लेने के अर्थ मे है । हुणइ । जुहोति । जि-जीतने के अर्थ मे । जिणइ । पक्ष में-जअइ । 'एवमन्येऽपि' से जि को जअ आदेश । जयति । लू धातु छेदन-अन्नादि-पोधों के काटने में है । धातु के अन्त 'ण', पूर्व को ह्रस्व । 'लादेशे वा' से एकार । लुणेइ, लुणइ । लुनाति । इसी प्रकार धुणेइ, धुणइ । धूनाति । 'श्रवादीनामिति' । श्रु इत्यादिक उक्त पाँच धातुओं से विहित जो णकारागम है वह कहीं विकल्प से होता है । श्रुधातु से क्त्वाप्रत्यय । 'क्त्वा तूण' से तूण । उक्त वार्तिक से विकल्प से ण । 'सर्वत्र लवराम्' से रेफलोप । 'ए च क्त्वा०' मे इकार । सुणिऊण । पक्ष में-'अडादेशा बहुलम्' से उकार को ओकार । सोऊण । इसी प्रकार जिणिऊण, जेऊण-भी होंगे । लुणिअ व मे लू धातु, तव्य प्रत्यय । उक्त सूत्र से णकारागम, पूव को ह्रस्व । 'ए च क्त्वा०' से इकार । 'कगचज०' से तलोप । 'अधो मनयाम्' से यलोप । 'शेषादेशयो०' से वकार-द्वित्व । 'मो बिन्दु' से बिन्दु । लुणिअव्व । श्रवादिभ्य इति । श्रु-इत्यादिक धातुओं से अतिरिक्त भी कहीं धातु के अन्त में ण होता है । स्तु धातु । णकारागम । 'स्तस्य थ' से थकार । थुणइ, थुणिऊण । पूर्ववत् ॥ ५६ ॥

## भावकर्मणोर्व्वश्च ॥ ५७ ॥

**एषा भावकर्मणोरन्त्ये व्व-शब्द प्रयोक्तव्य, चकारात् णश्च । सुव्वइ ( २-४३ श = स, ३-३ रलोप, व्वप्रयोगे, सयोगे ८ । ८ । २२७ हेम० ह्रस्व०, ७-१ ति = इ ) । सुणिज्जइ ( ८-५६ णत्वे ह्रस्वे च कृते, ७-३३ अ = इ, इति सुण-इ = सुणि जाते, ७-२१ धातुप्रत्यययोर्मध्ये ज्ज, ७-१ त = इ ) । हुव्वइ, हुणिज्जइ । जिव्वइ, जिणिज्जइ । लुव्वइ, लुणिज्जइ । धुव्वइ, धुणिज्जइ[1] ( पूर्ववत् सर्वेषां सिद्धिर्ज्ञेया ) ॥ ५७ ॥**

भावकर्मणोर्व्वश्च—भावे कर्मणि चार्थे श्रवादीना धातूनामन्ते कृतद्वित्वो 'व्व' इति भवति । चकारात् पूर्वसूत्रोक्तो णकारश्च । सुव्वइ । पक्षे-सुणिअइ सुणिज्जइ । श्रूयते । हुव्वइ हुणिअइ, हुणिज्जइ । हूयते । जिव्वइ जिणिअइ, जिणिज्जइ । जीयते । लुव्वइ, लुणिअइ लुणिज्जइ । लूयते । धुव्वइ धुणिअइ, धुणिज्जइ । धूयते ॥ ५७ ॥

भावेति । भाव और कर्म मे श्रु इत्यादिक धातुओं के अन्त में द्वित्व-वकार का अर्थात् 'व्व' इसका आगम हो । सु वइ । 'सवत्र लवराम्' से रेफलोप । 'ततिपो०' से इकार । सु वइ । पक्ष मे-'यक इअइज्जौ' से इअइज्ज । 'क्वचिदपि लोप' से णकारा कार का लोप । रेफलोप । शकार को सकार । त को इकार । पूर्वोक्त के सदृश होंगे । सुणिअइ, सुणिज्जइ । श्रूयते । इसी प्रकार सर्वत्र जानना । लू और धू धातु मे ह्रस्व

१ श्रूयते-हूयते-जीयते-लूयते-धूयते ।

भी होगा। लुव्वइ, लुणिअइ, लुणिज्जइ। लूयते। धुव्वइ, धुणिअइ, धुणिज्जइ। धूयते॥५७॥

## गमादीना द्वित्वं वा ॥ ५८ ॥

**गमादीना धातूना द्वित्व वा भवति। गम्मइ (स्पष्ट), गमिज्जइ (७-३३ भविष्यति गमोऽकारस्येत्व, ७-२१ मध्ये ज्ज, ७-१ त = इ, एवमुत्तरत्रापि ज्ञेयम्)। रम्मइ, रमिज्जइ। हस्सइ, हसिज्जइ। गम्यते। रम्यते। हस्यते॥ ५८ ॥**

गमादीना द्वित्व वा—गम्लृ गतौ, भावकर्मणोर्विषये गमादीना धातूनाम् अन्त्यस्य वा द्वित्व स्यात्। कर्मणि लकार-गम्मइ। 'नान्त्यद्वित्वे' इति निषेधात् यक इअइज्जौ न स्त। पक्षे-गमिअइ, गमिज्जइ। गम्यते। एवम्-लब्भइ, लभिअइ, लभिज्जइ। लभ्यते। रम्मइ, रमिअइ, रमिज्जइ। रम्यते। भण्णइ भणिअइ, भणिज्जइ। भण्यते। आकृतिगणोऽयम्॥ ५८॥

गमादीनामिति। भाव और कम मे गमादिक धातुओं के अन्त्य वर्ण को विकल्प से द्वित्व हो। गम्मइ। 'ना त्यद्वित्वे' से निषेध होने से इय इज्ज नहीं होंगे। द्वित्व से ही भावकम की प्रतीति हो जायगी, अत तदथबोधक यक भी नही होगा। पक्ष म-गमिअइ, गमिज्जइ। गम्यते। इसीतरह लब्भइ। भकारद्वित्व के बाद 'वर्गेषु युज पूर्व' से बकार। लब्भइ। पक्ष मे-लभिअइ, लभिज्जइ। लभ्यते। एवम्-भण्णइ, भणिअइ, भणिज्जइ। भण्यते॥ ५८॥

## लिहेर्लिज्झः[1] ॥ ५९ ॥

**लिह आस्वादने, अस्य धातोर्लिज्झो भवति भावकर्मणो। लिज्झइ[2] (स्प० ७-१ त = इ)॥ ५९॥**

दुहिलिहिवहा दुज्झ लिज्झ बुज्झा[3]—एषां धातूना भावकर्मणोर्विषये यथाक्रम दुज्झ-लिज्झ-बुज्झा इत्येते आदेशा भवन्ति। दुह प्रपूरणे, लिह आस्वादने, वह प्रापणे। दुज्झइ। दुह्यते। लिज्झइ। लिह्यते। बुज्झइ। उह्यते। केचित्तु वेत्यनुवतयन्ति। तन्मते, दुहिअइ, दुहिज्जइ। लिहिअइ, लिहिज्जइ। वहिअइ, वहिज्जइ। इत्यादयोऽपि भवन्ति॥ ५९॥

**दुहीति। दुहादिक तीन धातुओं को भाव कर्म में दुज्झादिक क्रम से होते हैं। अर्थात्, दुह को दुज्झ, लिह को लिज्झ, वह को बुज्झ होते है। दुज्झइ। दुह दोहने क अर्थ में है। लिह आस्वाद लेने में अर्थात् चाटने के अर्थ में है। वह प्राप्त कराने में अर्थात् बोझ इत्यादि को यथास्थान पहुँचाने के अर्थ में है। दुज्झादिक आदेश होने पर दुज्झइ, लिज्झइ, बुज्झइ। साधुत्व सुगम है। कोई आचार्य 'वा' इसकी अनुवृत्ति करते है, उनके मत से दुज्झादिक आदेश विकल्पसे होंगे। पक्ष मे 'यक इअइज्जौ' से इअ-इज्ज आदेश होंगे। तब दुहिअइ, दुहिज्जइ। दुह्यते। एव लिहिअइ, लिहिज्जइ। लिह्यते। वहिअइ, वहिज्जइ। उह्यते। ये भी होंगे॥ ५९॥**

---

१ लिहेज्ज-लिज्जइ। का० पा०। २ लिह्यते। ३ सजाव यादिसमत पाठ।

